अग्निमन्तश्छादयसि पुरुषान् पशुभिः सह ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ॥ १४ ॥

अग्निम् । अन्तः । छादयसि । पुरुषान् । पशुऽभिः । सह ।
विजाऽवति । प्रजाऽवति । वि । ते । पाशान् । चृतामसि ॥ १४ ॥

अन्तरा द्यां च पृथिवीं च यद् व्यचस्तेन शालां प्रति गृह्णामि त इमाम् ।
यदन्तरिक्षं रजसो विमानं तत् कृण्वेहमुदरं शेवधिभ्यः ।
तेन शालां प्रति गृह्णामि तस्मै ॥ १५ ॥

अन्तरा । द्याम् । च । पृथिवीम् । च । यत् । व्यचः । तेन । शालाम् । प्रति । गृह्णामि । ते । इमाम् ।
यत् । अन्तरिक्षम् । रजसः । विऽमानम् । तत् । कृण्वे । अहम् । उदरम् । शेवधिऽभ्यः ।
तेन । शालाम् । प्रति । गृह्णामि । तस्मै ॥ १५ ॥

ऊर्जस्वती पयस्वती पृथिव्यां निमिता मिता ।
विश्वान्नं बिभ्रती शाले मा हिंसीः प्रतिगृह्णतः ॥ १६ ॥

ऊर्जस्वती । पयस्वती । पृथिव्याम् । निऽमिता । मिता ।
विश्वऽअन्नम् । बिभ्रती । शाले । मा । हिंसीः । प्रतिऽगृह्णतः ॥ १६ ॥

तृणैरावृता पलदान् वसाना रात्रीव शाला जगतो निवेशनी ।
मिता पृथिव्यां तिष्ठसि हस्तिनीव पद्वती ॥ १७ ॥

तृणैः । आऽवृता । पलदान् । वसाना । रात्रीऽइव । शाला । जगतः । निऽवेशनी ।
मिता । पृथिव्याम् । तिष्ठसि । हस्तिनीऽइव । पत्ऽवती ॥ १७ ॥

इटस्य ते वि चृताम्यपिनद्धमपोर्णुवन् ।
वरुणेन समुब्जितां मित्रः प्रातर्व्युब्जतु ॥ १८ ॥

इटस्य । ते । वि । चृतामि । अपिऽनद्धम् । अपऽऊर्णुवन् ।
वरुणेन । सम्ऽउब्जिताम् । मित्रः । प्रातः । वि । उब्जतु ॥ १८ ॥

---

१ K $\overset{m}{K}$ P J परुषा॰. Cp पूरुषा॰. We with A $\overset{h}{B}$ D R $\overset{m}{S}$ V Dc Cs $\overset{2}{P}$ २ P छादयासि।. We with $\overset{2}{P}$ J Cp. ३ A B $\overset{h}{B}$ D K $\overset{m}{K}$ R $\overset{m}{S}$ V Cs गृह्णामि. $\overset{2}{P}$ J ते।. We with Dc P Cp. ४ A इडस्य. $\overset{m}{K}$ Dc इष्टस्य. We with $\overset{h}{B}$ D K R $\overset{m}{S}$ V Cs P $\overset{2}{P}$ J Cp. ५ K J ॰मुपोर्णुवन्.

ब्रह्मणा शालां निमितां कविभिर्निमितां मिताम् ।
इन्द्राग्नी रक्षतां शालाममृतौ सोम्यं सदः ॥ १९ ॥

ब्रह्मणा । शालाम् । निऽमिताम् । कविऽभिः । निऽमिताम् । मिताम् ।
इन्द्राग्नी इति । रक्षताम् । शालाम् । अमृतौ । सोम्यम् । सदः ॥ १९ ॥

कुलायेऽधि कुलायं कोशे कोशः समुब्जितः ।
तत्र मर्तो वि जायते यस्माद् विश्वं प्रजायते ॥ २० ॥ (७)

कुलाये । अधि । कुलायम् । कोशे । कोशः । सम्ऽउब्जितः ।
तत्र । मर्तः । वि । जायते । यस्मात् । विश्वम् । प्रऽजायते ॥ २० ॥ (७)

या द्विपक्षा[1] चतुष्पक्षा षट्पक्षा या निमीयते ।
अष्टापक्षां दशपक्षां शालां मानस्य पत्नीमग्निर्गर्भ इवा शये ॥ २

या । द्विऽपक्षा । चतुःऽपक्षा । षट्ऽपक्षा । या । निऽमीयते ।
अष्टाऽपक्षाम् । दशऽपक्षाम् । शालाम् । मानस्य । पत्नीम् । अग्निः । गर्भःऽइव । आ । शये

प्रतीचीं त्वा प्रतीचीनः शाले प्रैम्यहिंसतीम् ।
अग्निर्ह्य१न्तरापश्च[2]र्तस्य प्रथमा द्वाः ॥ २२ ॥

प्रतीचीम् । त्वा । प्रतीचीनः । शाले । प्र । एमि । अहिंसतीम् ।
अग्निः । हि । अन्तः । आपः । च । ऋतस्य । प्रथमा । द्वाः ॥ २२ ॥

इमा आपः प्र भराम्ययक्ष्मा यक्ष्मनाशनीः ।
गृहानुप प्र सीदाम्यमृतेन सहाग्निना ॥ २३ ॥

इमाः । आपः । प्र । भरामि । अयक्ष्माः । यक्ष्मऽनाशनीः ।
गृहान् । उप । प्र । सीदामि । अमृतेन । सह । अग्निना ॥ २३ ॥

मा नः पाशं प्रति मुचो[3] गुरुर्भारो लघुर्भव ।
वधूमिव त्वा शाले[4] यत्रकामं भरामसि ॥ २४ ॥

---

१ R °क्षाश्च°. A °क्षाच°. $\overset{m}{K}$ V Dc °क्षां च. We with $\overset{h}{B}$ D K $\overset{m}{S}$ Cs P $\overset{2}{P}$ J Cp.
we with A B $\overset{h}{B}$ D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc Cs. See Rw. ३ $\overset{h}{B}$ Cs मुञ्चो. P $\overset{2}{P}$ मुञ्चः।. W
A D K $\overset{m}{K}$ R $\overset{m}{S}$ V Dc J Cp. ४ $\overset{m}{S}$ शाले. We with A $\overset{h}{B}$ D K $\overset{m}{K}$ R V Dc Cs.

मा । नः । पार्शम् । प्रति । मुचः । गुरुः । भारः । लघुः । भव ।
वधूम्ऽइव । त्वा । शाले । यत्रऽकामम् । भरामसि ॥ २४ ॥

**प्राच्या दिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ २५ ॥**[1]

प्राच्याः । दिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ २५ ॥

**दक्षिणाया दिशः० ॥ २६ ॥**

दक्षिणायाः । दिशः ।०॥ २६ ॥

**प्रतीच्या दिशः० ॥ २७ ॥**

प्रतीच्याः । दिशः ।०॥ २७ ॥

**उदीच्या दिशः० ॥ २८ ॥**

उदीच्याः । दिशः ।०॥ २८ ॥

**ध्रुवाया दिशः० ॥ २९ ॥**

ध्रुवायाः । दिशः ।०॥ २९ ॥

**ऊर्ध्वाया दिशः० ॥ ३० ॥**

ऊर्ध्वायाः । दिशः । शालायाः ।०॥ ३० ॥

**दिशोदिशः शालाया नमो महिम्ने स्वाहा देवेभ्यः स्वाह्येभ्यः ॥ ३१ ॥** (८)

दिशःऽदिशः । शालायाः । नमः । महिम्ने । स्वाहा । देवेभ्यः । स्वाह्येभ्यः ॥ ३१ ॥ (८)

इति द्वितीयेनुवाके प्रथमं सूक्तम् ॥

ब्राह्मणो वृषभ हत्वा तन्मास भिन्नभिन्नदेवताभ्यो जुहोति । तत्र वृषभस्य प्रशसा तदङ्गाना च कतमानि कतमदेवेभ्यः प्रियाणि भवन्ति तद्विवेचनम् । वृषभबलिहवनस्य महत्त्व च वर्ण्यते । तदुत्पन्न श्रेयश्च स्तूयते । सांप्रदायिकास्तु एव विनियुञ्जन्ति सूक्तम् । तद्यथा । वृषोतसर्गे "साहस्र" इत्यर्थसूक्तेन ऋषभ सपात्य अभिमन्त्र्य विसृजेत् ॥ "रेतोधायै" इत्येतै. षड्भिः सौत्रमन्त्रै "एत वो युवानम्" [९ ४. २४] इत्यृचा च वत्सस्याभिमन्त्रणं कृत्वा प्रोक्षण कुर्यात् ॥

तथा अनेन सूक्तेन पुष्टिकामो वशाविधानेन [कौ० ५ ८] ऋषभेण इन्द्र यजते ॥

तथा अनेन सूक्तेन सपत्कामः पौर्णमास्यां वशाविधानेन श्वेतेन ऋषभेण इन्द्र यजते ॥

तद् उक्त कौशिकेन । "इन्द्रस्य कुक्षि" [७ ११६] साहस्रः [९ ४] इत्यृषभ सपातवन्तम् अतिसृजाति । रेतोधायै "त्वातिसृजामि वयोधायै त्वातिसृजामि यूथत्वायै त्वातिसृजामि गणत्वायै त्वातिसृजामि सहस्रपोषायै त्वातिसृजाम्यपरिमितपो- "षायै त्वातिसृजामि । एत वो युवानम् इति पुराण प्रचृत्य नवम् उत्सृजाति सप्रोक्षति । उत्तरेण पुष्टिकाम ऋषभेणेन्द्र यजते । 'संपत्कामः श्वेतेन पौर्णमास्याम्" इति [कौ° ३ ७] ॥

तथा ऋषभसवे अनेन सूक्तेन निरुप्तहविरभिमर्शन सपात दातृवाचनं दानं च कुर्यात् । तद् आह कौशिक । "साहस्र इत्यृषभम्" इति [कौ° ८. ७] ॥ अभिमर्शनादिषु सूत्र तु "आशानाम्" [१ ३१] इति सूक्त उदाहृतम् ॥

परिशिष्टेपि वृषोत्सर्गे अस्य सूक्तस्य विनियोग क्रुतः । तथा चोक्तम् । "साहस्रस्त्वेष इति ऋषभ सपातवन्त कृत्वा" इति [प° १७] ॥

**साहस्रस्त्वेष ऋषभः पयस्वान् विश्वा रूपाणि वक्षणासु बिभ्रत् ।**
**भद्रं दात्रे यजमानाय शिक्षन् बार्हस्पत्य उस्रियस्तन्तुमातान् ॥ १ ॥**

---

१ B स्वाहेभ्यः.

साहस्रः[1] । त्वेषः । ऋषभः । पयस्वान् । विश्वा । रूपाणि । वक्षणासु । बिभ्रत् ।
भद्रम् । दात्रे । यजमानाय । शिक्षन् । बार्हस्पत्यः । उस्रियः । तन्तुम् । आ । अतान् ॥ १ ॥

अपां यो अग्रे प्रतिमा बभूव प्रभूः सर्वस्मै पृथिवीव देवी ।
पिता वत्सानां पतिरघ्न्यानां[2] साहस्रे पोषे अपि नः कृणोतु ॥ २ ॥

अपाम् । यः । अग्रे । प्रतिऽमा । बभूव । प्रऽभूः । सर्वस्मै । पृथिवीऽइव । देवी ।
पिता । वत्सानाम् । पतिः । अघ्न्यानाम् । साहस्रे । पोषे[3] । अपि । नः । कृणोतु ॥ २ ॥

पुमानन्तर्वान्त्स्थविरः पयस्वान् वसोः कबन्धमृषभो बिभर्ति ।
तमिन्द्राय पथिभिर्देवयानैर्हुतमग्निर्वहतु जातवेदाः ॥ ३ ॥

पुमान् । अन्तःऽवान् । स्थविरः । पयस्वान् । वसोः । कबन्धम्[4] । ऋषभः । बिभर्ति ।
तम्[5] । इन्द्राय । पथिऽभिः । देवऽयानैः । हुतम् । अग्निः । वहतु । जातऽवेदाः ॥ ३ ॥

पिता वत्सानां पतिरघ्न्यानामथो पिता महतां गर्गराणाम् ।
वत्सो जरायु[6] प्रतिधुक् पीयूष आमिक्षा घृतं तद् वस्य रेतः ॥ ४ ॥

पिता । वत्सानाम् । पतिः । अघ्न्यानाम् । अथो इति । पिता । महताम् । गर्गराणाम् ।
वत्सः । जरायु । प्रतिऽधुक् । पीयूषः । आमिक्षा । घृतम् । तत् । ॐ इति । अस्य । रेतः ॥ ४ ॥

देवानां भाग उपनाह एषोऽपां रस ओषधीनां घृतस्य ।
सोमस्य भक्षमवृणीत शक्रो बृहन्नद्रिरभवद् यच्छरीरम् ॥ ५ ॥

देवानाम् । भागः । उपऽनाहः । एषः । अपाम् । रसः । ओषधीनाम् । घृतस्य ।
सोमस्य । भक्षम् । अवृणीत । शक्रः । बृहन्[7] । अद्रिः । अभवत् । यत् । शरीरम् ॥ ५ ॥

सोमेन पूर्णं कलशं बिभर्षि त्वष्टा रूपाणां जनिता पशूनाम् ।
शिवास्ते सन्तु प्रजन्व इह या इमा न्य[8]स्मभ्यं स्वधिते यच्छ या अमूः ॥ ६ ॥

सोमेन । पूर्णम् । कलशम् । बिभर्षि । त्वष्टा । रूपाणाम् । जनिता । पशूनाम् ।
शिवाः । ते । सन्तु । प्रऽजन्वः[9] । इह । याः । इमाः । नि । अस्मभ्यम् । स्वऽधिते । यच्छ ।
याः । अमूः ॥ ६ ॥

---

१ P सहस्रः ।. We with P̊ J Cp. २ K̊ °रघ्न्यानां. ३ P पोषे ।. ४ P कबंधम् ।. ५ P नत् ।. ६ B B̊ R S̊ Cs Cp जरायुः. We with A D K K̊ V Dc P P̊ J. ७ P J बृहन् ।. We with P̊ Cp. ८ B B̊ Dc Cs °न्य३. We with D K K̊ S̊ V. ९ J प्रऽजन्वः ।. We with P P̊ Cp.

आज्यं बिभर्ति घृतमस्य रेतः साहस्रः पोषस्तमु यज्ञमाहुः ।
इन्द्रस्य रूपमृषभो वसानः सो अस्मान् देवाः शिव ऐतु दत्तः ॥ ७ ॥

आज्यम् । बिभर्ति । घृतम् । अस्य । रेतः । साहस्रः । पोषः । तम् । ऊं इति । यज्ञम् । आहुः ।
इन्द्रस्य । रूपम् । ऋषभः । वसानः । सः । अस्मान् । देवाः । शिवः । आ । एतु । दत्तः ॥ ७ ॥

इन्द्रस्यौजो वरुणस्य बाहू अश्विनोरंसौ मरुतामियं ककुत् ।
बृहस्पतिं संभृतमेतमाहुर्ये धीरासः कवयो ये मनीषिणः ॥ ८ ॥

इन्द्रस्य । ओजः । वरुणस्य । बाहू इति । अश्विनोः । अंसौ । मरुताम् । इयम् । ककुत् ।
बृहस्पतिम् । सम्ऽभृतम्[1] । एतम् । आहुः । ये । धीरासः । कवयः । ये । मनीषिणः ॥ ८ ॥

देवीर्विशः पयस्वाना तनोषि त्वामिन्द्रं त्वां सरस्वन्तमाहुः ।
सहस्रं स एकमुखा[2] ददाति यो ब्राह्मण ऋषभमाजुहोति ॥ ९ ॥

देवीः । विशः । पयस्वान् । आ । तनोषि । त्वाम् । इन्द्रम् । त्वाम् । सरस्वन्तम् । आहुः ।
सहस्रम् । सः । एकऽमुखाः । ददाति । यः । ब्राह्मणे । ऋषभम् । आऽजुहोति ॥ ९ ॥

बृहस्पतिः सविता ते वयो दधौ त्वष्टुर्वायोः पर्यात्मा त[3] आभृतः ।
अन्तरिक्षे मनसा त्वा जुहोमि बर्हिष्टे द्यावापृथिवी उभे स्ताम् ॥१०॥ (९)

बृहस्पतिः । सविता । ते । वयः । दधौ । त्वष्टुः । वायोः । परि । आत्मा । ते । आऽभृतः ।
अन्तरिक्षे । मनसा । त्वा । जुहोमि । बर्हिः । ते । द्यावापृथिवी इति । उभे इति । स्ताम् ॥ १० ॥ (९)

य इन्द्र इव देवेषु गोष्वेति विवावदत् ।
तस्य ऋषभस्याङ्गानि ब्रह्मा सं स्तौतु भद्रया ॥ ११ ॥

यः । इन्द्रःऽइव । देवेषु । गोषु । एति । विऽवावदत् ।
तस्य । ऋषभस्य । अङ्गानि । ब्रह्मा । सम् । स्तौतु । भद्रया ॥ ११ ॥

पार्श्वे आस्तामनुमत्या भगस्यास्तामनूवृजौ[4] ।
अष्ठीवन्तावब्रवीन्मित्रो ममैतौ केवलाविति ॥ १२ ॥

पार्श्वे इति । आस्ताम् । अनुऽमत्याः । भगस्य । आस्ताम् । अनुऽवृजौ ।
अष्ठीवन्तौ । अब्रवीत् । मित्रः । मम । एतौ । केवलौ । इति ॥ १२ ॥

---

१ P̊ सम्ऽवृतम् ।. We with P J Cp. २ K̊ एकमेखा ३ K न. ४ B̊ K K̊ V Dc °मनुवृजौ. We with A D R S̊ Cs.

भसदासीदादित्यानां श्रोणी आस्तां बृहस्पतेः ।
पुच्छं वातस्य देवस्य तेन धूनोत्योषधीः ॥ १३ ॥

भसत् । आसीत् । आदित्यानाम् । श्रोणी इति । आस्ताम् । बृहस्पतेः ।
पुच्छम् । वातस्य । देवस्य । तेन । धूनोति । ओषधीः ॥ १३ ॥

गुदा आसन्त्सिनीवाल्याः सूर्यायास्त्वचमब्रुवन् ।
उत्थातुरब्रुवन् पद ऋषभं यदकल्पयन् ॥ १४ ॥

गुदाः । आसन् । सिनीवाल्याः । सूर्यायाः । त्वचम् । अब्रुवन् ।
उत्थातुः । अब्रुवन् । पदः । ऋषभम् । यत् । अकल्पयन् ॥ १४ ॥

क्रोड आसीज्जामिशंसस्य सोमस्य कलशो धृतः ।
देवाः[1] संगत्य यत् सर्व ऋषभं व्यकल्पयन्[2] ॥ १५ ॥

क्रोडः । आसीत् । जामिऽशंसस्य । सोमस्य । कलशः । धृतः ।
देवाः । सम्ऽगत्य । यत् । सर्वे । ऋषभम् । विऽअकल्पयन् ॥ १५ ॥

ते कुष्ठिकाः[3] सरमायै कूर्मेभ्यो अदधुः शफान् ।
ऊबध्यमस्य[4] कीटेभ्यः श्ववर्तेभ्यो[5] अधारयन् ॥ १६ ॥

ते । कुष्ठिकाः । सरमायै । कूर्मेभ्यः । अदधुः । शफान् ।
ऊबध्यम् । अस्य । कीटेभ्यः । श्वऽवर्तेभ्यः । अधारयन् ॥ १६ ॥

शृङ्गाभ्यां रक्ष ऋषत्यवर्तिं हन्ति चक्षुषा ।
शृणोति भद्रं कर्णाभ्यां गवां यः पतिरघ्न्यः[6] ॥ १७ ॥

शृङ्गाभ्याम् । रक्षः । ऋषति । अवर्तिम् । हन्ति । चक्षुषा ।
शृणोति । भद्रम् । कर्णाभ्याम् । गवाम् । यः । पतिः । अघ्न्यः ॥ १७ ॥

शतयाजं स यजते नैनं दुन्वन्त्यग्नयः ।
जिन्वन्ति विश्वे तं देवा यो ब्राह्मण ऋषभमाजुहोति ॥ १८ ॥

---

१ B K $K^m$ D $S^m$ R Dc देवाः. $B^h$ Cs देवास्सं°. २ A B $B^h$ D $K^m$ Cs व्यकल्पयन्. K यदर्कल्पयन्. We with R $S^m$ V Dc P $P^2$ J Cp. ३ A B $B^h$ D Cs P J कुष्ठिकाः. We with K $K^m$ R $S^m$ V Dc $P^2$ Cp. ४ $K^m$ ऊवध्य°. ५ A $B^h$ D K $K^m$ R V Dc Cs P $P^2$ J शवर्तेभ्यो. We with $S^m$ as corrected and Cp. ६ A B $B^h$ R Cs P J Cp °रघ्न्यः. We with D K $K^m$ $S^m$ V Dc $P^2$.

शतऽयाजम् । सः । यजते । न । एनम् । दुन्वन्ति । अग्नयः ।
जिन्वन्ति । विश्वे । तम् । देवाः । यः । ब्राह्मणे । ऋषभम् । आऽजुहोति ॥ १८ ॥

**ब्राह्मणेभ्य ऋषभं दत्त्वा वरीयः कृणुते मनः ।**
**पुष्टिं सो अघ्न्यानां स्वे गोष्ठेव पश्यते ॥ १९ ॥**

ब्राह्मणेभ्यः । ऋषभम् । दत्त्वा । वरीयः । कृणुते । मनः ।
पुष्टिम् । सः । अघ्न्यानाम् । स्वे । गोऽस्थे । अव । पश्यते ॥ १९ ॥

**गावः सन्तु प्रजाः सन्त्वथो अस्तु तनूबलम् ।**
**तत् सर्वमनु मन्यन्तां देवा ऋषभदायिने[१] ॥ २० ॥**

गावः । सन्तु । प्रऽजाः । सन्तु । अथो इति । अस्तु । तनूऽबलम् ।
तत् । सर्वम् । अनु । मन्यन्ताम् । देवाः । ऋषभऽदायिने ॥ २० ॥

**अयं पिपान इन्द्र इद् रयिं दधातु चेतनीम् ।**
**अयं धेनुं सुदुघां नित्यवत्सां वशं[२] दुहां[२] विपश्चितं परो दिवः ॥ २१ ॥**

अयम् । पिपानः । इन्द्रः । इत् । रयिम् । दधातु । चेतनीम् ।
अयम् । धेनुम् । सुऽदुघाम् । नित्यऽवत्साम् । वशम् । दुहाम् । विपःऽचितम् । परः ।
दिवः ॥ २१ ॥

**पिशङ्गरूपो नभसो वयोधा ऐन्द्रः शुष्मो विश्वरूपो न आगन् ।**
**आयुरस्मभ्यं दधत् प्रजां च रायश्च पोषैरभि नः सचताम् ॥ २२ ॥**

पिशङ्गऽरूपः । नभसः । वयःऽधाः । ऐन्द्रः । शुष्मः । विश्वऽरूपः । नः । आ । अगन् ।
आयुः । अस्मभ्यम् । दधत् । प्रऽजाम् । च । रायः । च । पोषैः । अभि । नः । सचताम् ॥ २२ ॥

**उपेहोपपर्चनास्मिन् गोष्ठ उप पृञ्च नः ।**
**उप ऋषभस्य यद् रेत उपेन्द्र तव वीर्यम् ॥ २३ ॥**

उप । इह । उपऽपर्चन । अस्मिन् । गोऽस्थे । उप । पृञ्च । नः ।
उप । ऋषभस्य । यत् । रेतः । उप । इन्द्र । तव । वीर्यम् ॥ २३ ॥

**एतं वो युवानं प्रति दध्मो अत्र तेन क्रीडन्तीश्चरत[३] वशाँ[४] अनु ।**

---

१ B B[h] ऋषभ॰. २ So all our authorities. Probably वशंदुहाम् is one pada. ३ B B[h] Cs क्रीडन्ति॰. ४ A B[h] Cs वशे॑. We with D K K[m] R S[m] V Dc.

मा नो हासिष्ट जनुषा सुभागा रायश्च पोषैरभि नः सचध्वम् ॥२४॥ (१०)

एतम् । वः । युवानम् । प्रति । दध्मः । अत्र । तेन । क्रीडन्तीः । चरत । वशान् । अनु ।
मा । नः । हासिष्ट । जनुषा । सुऽभागाः । रायः । च । पोषैः । अभि । नः । सचध्वम् ॥२४॥ (१०)

द्वितीयेनुवाके द्वितीयं सूक्तम् ॥

इति द्वितीयोनुवाकः ॥

अस्मिन् सूक्ते पञ्चौदने नाम सवे हूयमानस्याजस्य जीवतो मारितस्य च प्रशंसा । अपराजिताया आनीयमानोजः प्रोक्तप्रकारेण हतः संस्कृतश्च इन्द्रं तर्पयित्वा तृतीयनाके नाम स्वर्गभागे यद्वा सुकृतां पुण्यलोके गच्छति । तत्र गतपूर्वस्य यजमानादेश्च तमोहन्ता भवतीत्यादि वर्णनम् ॥

सांप्रदायिका अप्येवमेव । पञ्चौदनसवे "आ नयैतम्" इत्यर्थसूक्तस्य विनियोग । एतत्सूक्तेन निरुप्तहविरभिमर्शन सपात दातृवाचन दानं च कुर्यात् । तथा च सूत्रम् । "आ नयैतम् इत्यपराजिताद् अजम् आनीयमानम् अनुमन्त्रयते" इत्यादि "आ नयैतम् इति सूक्तेन सपातवन्तम् आञ्जनान्तम्" इत्यन्तम् [ कौ° ८. ५ ] इति ॥

तथा पशौ अनेन सूक्तेन अपराजिताद् आनीयमानम् अजम् अनुमन्त्रयेत । तद् उक्तं वैताने । "आ नयैतम् इत्याद्याञ्जनान्तम्" इति [ वै° २. ६ ] ॥

तथा अग्निचयने पुनश्चितौ "येना सहस्रम्" इत्यनया गार्हपत्ये चीयमाना इष्टका ब्रह्मा अनुमन्त्रयेत । तद् उक्तं वैताने । "गार्हपत्य उक्तम् । अयम् अग्निः सत्पतिः [ ७ ६४] येना सहस्रम्" [९. ५ १७] इति [वै° ५. २] ॥

तथा तत्रैव वैश्वकर्मणहोमानुमन्त्रणे तस्या एव विनियोग । तद् उक्तं वैताने । "ये भक्षयन्तः [ २ ३५] एत सधस्थाः [६ १२३] इति द्वे येना सहस्रम् [९. ५ १७] इति वैश्वकर्मणहोमान्" इति [वै° ५. २] ॥

आ नयैतमा रभस्व सुकृतां लोकमपि गच्छतु प्रजानन् ।
तीर्त्वा तमांसि बहुधा महान्त्यजो नाकमा क्रमतां तृतीयम् ॥ १ ॥

आ । नय । एतम् । आ । रभस्व । सुऽकृताम् । लोकम् । अपि । गच्छतु । प्रऽजानन् ।
तीर्त्वा । तमांसि । बहुऽधा । महान्ति । अजः । नाकम् । आ । क्रमताम् । तृतीयम् ॥ १ ॥

इन्द्राय भागं परि त्वा नयाम्यस्मिन् यज्ञे यजमानाय सूरिम् ।
ये नो द्विषन्त्यनु तान् रभस्वानागसो यजमानस्य वीराः ॥ २ ॥

इन्द्राय । भागम् । परि । त्वा । नयामि । अस्मिन् । यज्ञे । यजमानाय । सूरिम् ।
ये । नः । द्विषन्ति । अनु । तान् । रभस्व । अनागसः । यजमानस्य । वीराः ॥ २ ॥

प्र पदोव नेनिग्धि दुश्चरितं यच्चचार शुद्धैः शफैरा क्रमतां प्रजानन् ।
तीर्त्वा तमांसि बहुधा विपश्यन्नजो नाकमा क्रमतां तृतीयम् ॥ ३ ॥

प्र । पदः । अव । नेनिग्धि । दुःऽचरितम् । यत् । चचार । शुद्धैः । शफैः । आ । क्रमताम् । प्रऽजानन् ।

१ K K^m V Dc सुभगा. P P^2 J सुऽभगाः ।. We with A B D^h R S^m Cs Cp.

तीर्त्वा । तमांसि । बहुऽधा । विऽपश्यन् । अजः । नाकम् । आ । क्रमताम् । तृतीयम् ॥ ३ ॥

**अनु च्छ्य श्यामेन त्वचमेतां विशस्तर्यथापर्व[1]सिना माभि मंस्थाः[2] ।**

**माभि द्रुहः परुशः[3] कल्पयैनं तृतीये नाके अधि वि श्रयैनम् ॥ ४ ॥**

अनु । छ्य । श्यामेन । त्वचम् । एताम् । विऽशस्तः । यथाऽपरु । असिना । मा[4] । अभि । मंस्थाः[2] ।

मा । अभि । द्रुहः । परुऽशः[3] । कल्पय । एनम् । तृतीये । नाके । अधि । वि । श्रय । एनम् ॥ ४ ॥

**ऋचा कुम्भीमध्यग्नौ श्रयाम्या सिञ्चोदकमव धेह्येनम् ।**

**पर्याधत्ताग्निना शमितारः शृतो[5] गच्छतु सुकृतां यत्र लोकः ॥ ५ ॥**

ऋचा । कुम्भीम् । अधि । अग्नौ । श्रयामि । आ । सिञ्च । उदकम् । अव । धेहि । एनम् । परिऽआधत्त । अग्निना । शमितारः । शृतः । गच्छतु । सुऽकृताम् । यत्र । लोकः ॥ ५ ॥

**उत्क्रामातः परि चेदतं[6]तप्तश्चरो[7]रधि नाकं तृतीयम् ।**

**अग्नेरग्निरधि सं बभूविथ ज्योतिष्मन्तमभि लोकं जयैतम् ॥ ६ ॥**

उत् । क्राम । अतः । परि । च । इत् । अतप्तः । तप्तात् । चरोः । अधि । नाकम् । तृतीयम् । अग्नेः । अग्निः । अधि । सम् । बभूविथ । ज्योतिष्मन्तम् । अभि । लोकम् । जय । एतम् ॥ ६ ॥

**अजो अग्निरजमु ज्योतिराहुरजं जीवता ब्रह्मणे देयमाहुः ।**

**अजस्तमांस्यप हन्ति दूरमस्मिंल्लोके श्रद्दधानेन दत्तः ॥ ७ ॥**

अजः । अग्निः । अजम् । ऊं इति । ज्योतिः । आहुः । अजम् । जीवता । ब्रह्मणे । देयम् । आहुः । अजः । तमांसि । अप । हन्ति । दूरम् । अस्मिन् । लोके । श्रत्ऽदधानेन । दत्तः ॥ ७ ॥

**पञ्चौदनः पञ्चधा वि क्रमतामाक्रंस्यमानस्त्रीणि ज्योतींषि ।**

**ईजानानां सुकृतां प्रेहि मध्यं तृतीये नाके अधि वि श्रयस्व ॥ ८ ॥**

---

१ B $\overset{h}{\text{B}}$ D $\overset{m}{\text{S}}$ Cs °पर्वे३सिना. We with K $\overset{m}{\text{K}}$ V Dc. २ A B $\overset{h}{\text{B}}$ D K $\overset{m}{\text{K}}$ R $\overset{m}{\text{S}}$ V P $\overset{2}{\text{P}}$ J मांस्थाः. We with Dc Cs Cp. ३ $\overset{h}{\text{B}}$ परुश्यः क°. B परुषः क°. A D R P J परुशःऽ क°. K परुशुः. Cs Cp परुश्यःऽ. We with $\overset{m}{\text{K}}$ $\overset{m}{\text{S}}$ V Dc $\overset{2}{\text{P}}$. ४ P मा ।. We with $\overset{2}{\text{P}}$ J Cp. ५ D $\overset{m}{\text{S}}$ श्रितो. ६ B °दंदप्ता°. A D K $\overset{m}{\text{K}}$ R $\overset{m}{\text{S}}$ V Dc Cs °दंतप्ता°. $\overset{h}{\text{B}}$ °दंतप्ता°. P $\overset{2}{\text{P}}$ J Cp अतप्ताः ।. ७ K °श्चरोरग्नि.

पञ्चऽओदनः । पञ्चऽधा । वि । क्रमताम् । आऽक्रंस्यमानः । त्रीणि । ज्योतींषि ।
ईजानानाम् । सुऽकृताम् । प्र । इहि । मध्यम् । तृतीये । नाके । अधि । वि । श्रयस्व ॥ ८ ॥

अजा रोह सुकृतां यत्र लोकः शरभो न चत्तोति दुर्गाण्येषः[1] ।
पञ्चौदनो ब्रह्मणे दीयमानः स दातारं तृप्त्या तर्पयाति ॥ ९ ॥

अज । आ । रोह । सुऽकृताम् । यत्र । लोकः । शरभः । न । चत्तः । अति । दुःऽगानि । एषः ।
पञ्चऽओदनः । ब्रह्मणे । दीयमानः । सः । दातारम् । तृप्त्या । तर्पयाति ॥ ९ ॥

अजस्त्रिनाके त्रिदिवे त्रिपृष्ठे नाकस्य पृष्ठे ददिवांसं दधाति ।
पञ्चौदनो ब्रह्मणे दीयमानो विश्वरूपा धेनुः कामदुघास्येका ॥ १० ॥(११)

अजः । त्रिऽनाके । त्रिऽदिवे । त्रिऽपृष्ठे । नाकस्य । पृष्ठे । ददिऽवांसम् । दधाति ।
पञ्चऽओदनः । ब्रह्मणे । दीयमानः । विश्वऽरूपा । धेनुः । कामऽदुघा । असि । एका ॥ १० ॥ (११)

एतद् वो ज्योतिः पितरस्तृतीयं पञ्चौदनं ब्रह्मणेजं ददाति ।
अजस्तमांस्यप हन्ति दूरमस्मिंल्लोके श्रद्दधानेन दत्तः ॥ ११ ॥

एतत् । वः । ज्योतिः । पितरः । तृतीयम् । पञ्चऽओदनम् । ब्रह्मणे । अजम् । ददाति ।
अजः । तमांसि । अप । हन्ति । दूरम् । अस्मिन् । लोके । श्रत्ऽदधानेन । दत्तः ॥ ११ ॥

ईजानानां सुकृतां लोकमीप्सन् पञ्चौदनं ब्रह्मणेजं ददाति ।
स व्याप्तिमभि लोकं जयैतं शिवो३स्मभ्यं[2] प्रतिगृहीतो अस्तु ॥ १३ ॥

ईजानानाम् । सुऽकृताम् । लोकम् । ईप्सन् । पञ्चऽओदनम् । ब्रह्मणे । अजम् । ददाति ।
सः । विऽआप्तिम् । अभि । लोकम् । जय । एतम् । शिवः । अस्मभ्यम् । प्रतिऽगृहीतः ।
अस्तु ॥ १२ ॥

अजो ह्य१ग्नेरजनिष्ट[3] शोकाद् विप्रो विप्रस्य सहसो विपश्चित् ।
इष्टं पूर्तमभिपूर्तं वषट्कृतं तद् देवा ऋतुशः[4] कल्पयन्तु ॥ १३ ॥

अजः । हि । अग्नेः । अजनिष्ट । शोकात् । विप्रः । विप्रस्य । सहसः । विपःऽचित् ।
इष्टम् । पूर्तम् । अभिऽपूर्तम् । वषट्ऽकृतम् । तत् । देवाः । ऋतुऽशः । कल्पयन्तु ॥ १३ ॥

---

१ So we with A B[h] D R S[m] Cs P[2] Cp Rw. Dc K K[m] V दुर्गाण्येषः. P J एषः।. २ B K[m] शिवो ३. We with B[h] D K S[m] V Dc Cs. ३ A B[h] D R S[m] Dc Cs ह्य३. We with K K[m] V. ४ A B[h] D R P J Cs ऋतुशः॑क°. We with K[m] S[m] V Dc P[2] Cp.

अमोतं वासो दद्याद्धिरण्यमपि दक्षिणाम् ।
तथा लोकान्त्समाप्नोति ये दिव्या ये च पार्थिवाः ॥ १४ ॥

अमाऽउतम् । वासः । दद्यात् । हिरण्यम् । अपि । दक्षिणाम् ।
तथा । लोकान् । सम् । आप्नोति । ये । दिव्याः । ये । च । पार्थिवाः ॥ १४ ॥

एतास्त्वा[1]जोप यन्तु धाराः सोम्या[2] देवीर्घृतपृष्ठा मधुश्चुतः ।
स्तभान पृथिवीमुत द्यां नाकस्य पृष्ठेऽधि[3] सप्तरश्मौ ॥ १५ ॥

एताः । त्वा । अज[4] । उप । यन्तु । धाराः । सोम्याः । देवीः । घृतऽपृष्ठाः । मधुऽश्चुतः ।
स्तभान । पृथिवीम् । उत । द्याम् । नाकस्य । पृष्ठे । अधि । सप्तऽरश्मौ ॥ १५ ॥

अजो३ऽस्यज स्वर्गोऽसि त्वया लोकमङ्गिरसः प्राजानन्[5] ।
तं लोकं पुण्यं प्र ज्ञेषम् ॥ १६ ॥

अजः । असि । अज[6] । स्वःऽगः । असि । त्वया । लोकम् । अङ्गिरसः । प्र । अजानन् ।
तम् । लोकम् । पुण्यम् । प्र । ज्ञेषम् ॥ १६ ॥

येना सहस्रं वहसि येनाग्ने सर्ववेदसम् ।
तेनेमं यज्ञं नो वह स्वर्देवेषु गन्तवे ॥ १७ ॥

येन । सहस्रम् । वहसि । येन । अग्ने । सर्वऽवेदसम् ।
तेन । इमम् । यज्ञम् । नः । वह । स्वः । देवेषु । गन्तवे ॥ १७ ॥

अजः पक्वः स्वर्गे लोके दधाति पञ्चौदनो निर्ऋतिं बाधमानः ।
तेन लोकान्त्सूर्यवतो जयेम ॥ १८ ॥

अजः । पक्वः । स्वःऽगे । लोके । दधाति । पञ्चऽओदनः । निःऽऋतिम् । बाधमानः ।
तेन । लोकान् । सूर्यऽवतः । जयेम ॥ १८ ॥

यं ब्राह्मणे निदधे यं च विक्षु या विप्रुष ओदनानामजस्य ।
सर्वं तदग्ने सुकृतस्य लोके जानीतान्नः संगमने पथीनाम् ॥ १९ ॥

---

१ A B K $\overset{m}{K}$ Dc Cs °स्त्वाजोप We with $\overset{h}{B}$ D R $\overset{m}{S}$ V. २ $\overset{m}{K}$ सौम्या. ३ So we with all our MSS. See Rw. ४ P $\overset{2}{P}$ J Cp अजं ।. ५ B K $\overset{m}{K}$ V Dc प्रजानन्. We with A $\overset{h}{B}$ D R $\overset{m}{S}$ Cs. ६ P अज ।. $\overset{2}{P}$ J अजः ।. We with Cp.

यम् । ब्राह्मणे । नि॒ऽद॒धे । यम् । च॒ । वि॒क्षु । याः । वि॒ऽप्रुषः॑ । ओ॒द॒नाना॑म् । अ॒जस्य॑ ।
सर्व॑म् । तत् । अ॒ग्ने॒ । सु॒ऽकृ॒तस्य॑ । लो॒के । जा॒नी॒ता॒त् । नः॒ । स॒म्ऽगम॑ने । प॒थी॒नाम् ॥१९॥

**अ॒जो वा इ॒दम॒ग्रे व्य॑क्रमत॒ तस्योर॑ इ॒यम॑भवद्द्यौः पृ॒ष्ठम् ।**
**अ॒न्तरि॑क्षं॒ मध्यं॒ दिशः॑ पा॒र्श्वे स॑मु॒द्रौ कु॒क्षी ॥ २० ॥ (१२)**

अ॒जः । वै । इ॒दम् । अ॒ग्रे । वि । अ॒क्र॒म॒त॒ । तस्य॑ । उरः॑ । इ॒यम् । अ॒भ॒व॒त् । द्यौः । पृ॒ष्ठम् ।
अ॒न्तरि॑क्षम् । मध्य॑म् । दिशः॑ । पा॒र्श्वे इति॑ । स॒मु॒द्रौ । कु॒क्षी इति॑ ॥ २० ॥ (१२)

**स॒त्यं च॒र्तं च॒ चक्षु॑षी॒ विश्वं॑ स॒त्यं श्र॒द्धा प्रा॒णो वि॒राट् शिरः॑ ।**
**ए॒ष वा अप॑रिमितो य॒ज्ञो यद॒जः पञ्चौ॑दनः ॥ २१ ॥**

स॒त्यम् । च॒ । ऋ॒तम् । च॒ । चक्षु॑षी इति॑ । विश्व॑म् । स॒त्यम् । श्र॒द्धा । प्रा॒णः । वि॒ऽराट् । शिरः॑ ।
ए॒षः । वै । अप॑रिऽमितः । य॒ज्ञः । यत् । अ॒जः । पञ्च॑ऽओदनः ॥ २१ ॥

**अप॑रिमितमेव य॒ज्ञमा॒प्नोत्यप॑रिमितं॒ लो॒कमव॑ रुन्द्धे ।**
**यो॒३॒॑जं पञ्चौ॑दनं॒ दक्षि॑णाज्योतिषं॒ ददा॑ति ॥ २२ ॥**

अप॑रिऽमितम् । ए॒व । य॒ज्ञम् । आ॒प्नोति॑ । अप॑रिऽमितम् । लो॒कम् । अव॑ । रु॒न्द्धे॒ ।
यः । अ॒जम् । पञ्च॑ऽओदनम् । दक्षि॑णाऽज्योतिषम् । ददा॑ति ॥ २२ ॥

**नास्या॒स्थीनि॑ भिन्द्या॒न्न म॒ज्ज्ञो निर्ध॑येत् ।**
**सर्व॑मेनं स॒मादा॒येद॒मिदं॒ प्र वे॑शयेत् ॥ २३ ॥**

न । अ॒स्य॒ । अ॒स्थीनि॑ । भि॒न्द्या॒त् । न । म॒ज्ज्ञः । निः । ध॒ये॒त् ।
सर्व॑म् । ए॒न॒म् । स॒म्ऽआ॒दाय॑ । इ॒दम्ऽइ॑दम् । प्र । वे॒श॒ये॒त् ॥ २३ ॥

**इ॒दमि॑दमे॒वास्य॑ रू॒पं भ॑वति॒ तेनै॑नं॒ सं ग॑मयति ।**
**इषं॒ मह॒ ऊर्ज॑मस्मै दुहे॒ यो॒३॒॑जं पञ्चौ॑दनं॒ दक्षि॑णाज्योतिषं॒ ददा॑ति ॥ २४ ॥**

इ॒दम्ऽइ॑दम् । ए॒व । अ॒स्य॒ । रू॒पम् । भ॒व॒ति॒ । तेन॑ । ए॒न॒म् । सम् । ग॒म॒य॒ति॒ ।

---

१ P ब्रह्मणे ।. We with P² J Cp. २ So we with all our MSS. See Rw. ३ P °मिताः ।. ४ B रुधे. ५ B V ३॒. We with B^h D K K^m R S^m Dc Cs. ६ B B^h D Cs J मन्यो. A K K^m R S^m V Dc P P² Cp मज्ञो. ७ J अस्य ।. ८ B P इषं. ९ B K V यो३॒जं. We with B^h D K^m R S^m Dc Cs.

इषम् । महः । ऊर्जम् । अस्मै । दुहे । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २४ ॥

पञ्च रुक्मा पञ्च नवानि वस्त्रा पञ्चास्मै धेनवः कामदुघा भवन्ति ।
यो॒३॑जं[1] पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ २५ ॥

पञ्च । रुक्मा । पञ्च । नवानि । वस्त्रा । पञ्च । अस्मै । धेनवः । कामऽदुघाः । भवन्ति । यः । अजम् ।०॥ २५ ॥

पञ्च रुक्मा ज्योतिरस्मै भवन्ति वर्म वासांसि तन्वे भवन्ति ।
स्वर्गं लोकमश्नुते यो॒३॑जं[2] पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ २६ ॥

पञ्च । रुक्मा । ज्योतिः । अस्मै । भवन्ति । वर्म । वासांसि । तन्वे । भवन्ति । स्वःऽगम् । लोकम् । अश्नुते । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २६ ॥

या पूर्वं पतिं वित्त्वाथान्यं[3] विन्दतेपरम् ।
पञ्चौदनं च तावजं ददातो न वि योषतः ॥ २७ ॥

या । पूर्वम् । पतिम् । वित्त्वा । अथ । अन्यम् । विन्दते । अपरम् । पञ्चऽओदनम् । च । तौ । अजम् । ददातः । न । वि । योषतः ॥ २७ ॥

समानलोको भवति पुनर्भुवापरः[4] पतिः ।
यो॒३॑जं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ २८ ॥

समानऽलोकः । भवति । पुनःऽभुवा । अपरः । पतिः । यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ २८ ॥

अनुपूर्ववत्सां धेनुमनड्वाहमुपबर्हणम् ।
वासो हिरण्यं दत्त्वा ते यन्ति दिवमुत्तमाम्[5] ॥ २९ ॥

अनुपूर्वऽवत्साम् । धेनुम् । अनड्वाहम्[6] । उपऽबर्हणम् ।

---

१ B V यो॒३॑जं. We with B^h D K K^m R S^m Dc Cs. २ B K V यो॒३॑जं. We with B^h D K^m S^m Dc Cs. ३ A B^h D K^m R S^m V Cs P J °थान्यं. We with Dc P^2 Cp. ४ A °परापतिः. ५ K^m V P दिवमुत्तमम्. We with A B^h D K R S^m Dc Cs P^2 J Cp. ६ P °ड्वाअहम् ।. We with P^2 J Cp.

वासः। हिरण्यम्। दत्त्वा। ते। यन्ति। दिवम्। उत्ऽतमाम् ॥ २९ ॥

आत्मानं पितरं पुत्रं पौत्रं पितामहम्।

जायां जनित्रीं मातरं ये प्रियास्तानुप ह्वये ॥ ३० ॥ (१३)

आत्मानम्। पितरम्। पुत्रम्। पौत्रम्। पितामहम्।

जायाम्। जनित्रीम्। मातरम्। ये। प्रियाः। तान्। उप। ह्वये ॥ ३० ॥ (१३)

यो वै नैदाघं नामर्तुं[१] वेद।

एष वै नैदाघो नामर्तुर्यदजः पञ्चौदनः।

निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना।

योऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ ३१ ॥

यः। वै। नैदाघम्। नाम। ऋतुम्। वेद।

एषः। वै। नैदाघः। नाम। ऋतुः। यत्। अजः। पञ्चऽओदनः।

निः। एव। अप्रियस्य। भ्रातृव्यस्य। श्रियम्। दहति। भवति। आत्मना।

यः। अजम्। पञ्चऽओदनम्। दक्षिणाऽज्योतिषम्। ददाति ॥ ३१ ॥

यो वै कुर्वन्तं नामर्तुं वेद।

कुर्वतींकुर्वतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते।

एष वै कुर्वन्नामर्तुर्यदजः ०।०।० ॥ ३२ ॥

०। वै। कुर्वन्तम्। नाम।०।

कुर्वतीम्ऽकुर्वतीम्। एव। अप्रियस्य। भ्रातृव्यस्य। श्रियम्। आ। दत्ते।

०। वै। कुर्वन्। नाम।०॥ ३२ ॥

यो वै संयन्तं नामर्तुं वेद।

संयतींसंयतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा दत्ते।

एष वै संयन्नाम ०।०।० ॥ ३३ ॥

०। वै। सम्ऽयन्तम्। नाम।०।

संयतीम्ऽसंयतीम्। एव।०।

---

१ All the corrections from नाम ऋतु° to नामर्तु° are based on A B B[h] D K K[m] R S[m] V Dc Cs. See Rw.

०। वै । सम्ऽयन् । नाम॑ ।०॥ ३३ ॥

यो वै पिन्वन्तं नामर्तुं वेद॑ ।
पिन्वतींपिन्वतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा द॑त्ते ।
एष वै पिन्वन्नाम ०।०। ०॥ ३४ ॥

०। वै । पिन्वन्त॑म् । नाम॑ ।०।
पिन्वतीम्ऽपिन्वतीम् । एव ।०।
०। वै । पिन्वन् । नाम॑ ।०॥ ३४ ॥

यो वा उद्यन्तं नामर्तुं वेद॑ ।
उद्यतीमुंद्यतीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा द॑त्ते ।
एष वा उद्यन्नाम ०।०। ०॥ ३५ ॥

०। वै । उत्ऽयन्त॑म् । नाम॑ ।०।
उद्यतीम्ऽउंद्यतीम् । एव ।०।
०। वै । उत्ऽयन् । नाम॑ ।०॥ ३५ ॥

यो वा अभिभुवं नामर्तुं वेद॑ ।
अभिभवन्तीमभिभवन्तीमेवाप्रियस्य भ्रातृव्यस्य श्रियमा द॑त्ते ।
एष वा अभिभूर्नामर्तुर्यदजः पञ्चौदनः ।
निरेवाप्रियस्य भ्रातृव्यस्य श्रियं दहति भवत्यात्मना॑ ।
यो३ऽजं पञ्चौदनं दक्षिणाज्योतिषं ददाति ॥ ३६ ॥

यः । वै । अभिऽभुव॑म् । नाम॑ । ऋतुम् । वेद॑ ।
अभिभव॑न्तीम्ऽअभिभवन्तीम् । एव । अप्रियस्य । भ्रातृव्यस्य । श्रिय॑म् । आ । दत्ते ।
एषः । वै । अभिऽभूः । नाम॑ । ऋतुः । यत् । अजः । पञ्चऽओदनः ।
निः । एव । अप्रियस्य । भ्रातृव्यस्य । श्रिय॑म् । दहति । भव॑ति । आत्मना॑ ।
यः । अजम् । पञ्चऽओदनम् । दक्षिणाऽज्योतिषम् । ददाति ॥ ३६ ॥

अजं च पचत पञ्च चौदनान् ।

---

१ B V यो३ंजं. We with A B[h] D K K[m] R S[m] Dc Cs.

सर्वा दिशः संमनसः सध्रीचीः सान्तर्देशाः प्रति गृह्णन्तु त एतम् ॥ ३७ ॥

अजम् । च । पचत । पञ्च । च । ओदनान् ।

सर्वाः । दिशः । सम्ऽमनसः । सध्रीचीः । सऽअन्तर्देशाः । प्रति । गृह्णन्तु । ते । एतम् ॥ ३७ ॥

तास्ते रक्षन्तु तव तुभ्यमेतं ताभ्य आज्यं हविरिदं जुहोमि ॥ ३८ ॥ (१४)

ताः । ते । रक्षन्तु । तव । तुभ्यम् । एतम् । ताभ्यः । आज्यम् । हविः । इदम् । जुहोमि ॥ ३८ ॥ (१४)

इति तृतीयेनुवाके प्रथमं सूक्तम् ॥

"यो विद्याद्" इति सूक्तेन जप करोति स्वर्गकाम. इति विनियोगमाला सप्रदायानुसारेण । वस्तुतस्तु यो विद्यादित्यारभ्य यत्क्षत्तागम् इत्यन्तेषु षट्सु पर्यायेषु अतिथेर्माहात्म्य तथा तस्य सभाजनं तत्सभाजनस्य च यज्ञफलतुल्य फलं चेति आतिथ्यस्य प्रशंसा वर्ण्यते ॥

यो विद्याद् ब्रह्म प्रत्यक्षं परूंषि यस्य संभारा ऋचो यस्यानूक्यम् ॥ १ ॥

यः । विद्यात् । ब्रह्म । प्रतिऽअक्षम् । परूंषि । यस्य । सम्ऽभाराः । ऋचः । यस्य । अनूक्यम् ॥ १ ॥

सामानि यस्य लोमानि यजुर्हृदयमुच्यते परिस्तरणमिद्धविः ॥ २ ॥

सामानि । यस्य । लोमानि । यजुः । हृदयम् । उच्यते । परिऽस्तरणम् । इत् । हविः ॥ २ ॥

यद् वा अतिथिपतिरतिथीन् प्रतिपश्यति देवयजनं प्रेक्षते ॥ ३ ॥

यत् । वै । अतिथिऽपतिः । अतिथीन् । प्रतिऽपश्यति । देवऽयजनम् । प्र । ईक्षते ॥ ३ ॥

यदभिवदति दीक्षामुपैति यदुदकं याचत्यपः प्र णयति ॥ ४ ॥

यत् । अभिऽवदति । दीक्षाम् । उप । एति । यत् । उदकम् । याचति । अपः । प्र । नयति ॥ ४ ॥

या एव यज्ञ आपः प्रणीयन्ते ता एव ताः ॥ ५ ॥

याः । एव । यज्ञे । आपः । प्रऽनीयन्ते । ताः । एव । ताः ॥ ५ ॥

यत् तर्पणमाहरन्ति य एवाग्नीषोमीयः पशुर्बध्यते स एव सः ॥ ६ ॥

यत् । तर्पणम् । आऽहरन्ति । यः । एव । अग्नीषोमीयः । पशुः । बध्यते । सः । एव । सः ॥ ६ ॥

यदावसथान् कल्पयन्ति सदोहविर्धानान्येव तत् कल्पयन्ति ॥ ७ ॥

---

१ A B[h] D K[m] R S[m] V Dc Cs गृह्णन्तु. J Cp ते ।. We with P P[2]. २ B[h] ऋतो. ३ S[m] प्रणयति. ४ R एवं.

यत् । आऽवसथान् । कल्पयन्ति । सदःऽहविर्धानानि । एव । तत् । कल्पयन्ति ॥ ७ ॥

**यदुपस्तृणन्ति बर्हिरेव तत् ॥ ८ ॥**

यत् । उपऽस्तृणन्ति । बर्हिः । एव । तत् ॥ ८ ॥

**यदुपरिशयनमाहरन्ति स्वर्गमेव तेन लोकमव रुन्द्धे ॥ ९ ॥**

यत् । उपरिऽशयनम् । आऽहरन्ति । स्वःऽगम् । एव । तेन । लोकम् । अव । रुन्द्धे ॥ ९ ॥

**यत् कशिपूपबर्हणमाहरन्ति परिधय एव ते ॥ १० ॥**

यत् । कशिपुऽउपबर्हणम् । आऽहरन्ति । परिऽधयः । एव । ते ॥ १० ॥

**यदाञ्जनाभ्यञ्जनमाहरन्त्याज्यमेव तत् ॥ ११ ॥**

यत् । आञ्जनऽअभ्यञ्जनम् । आऽहरन्ति । आज्यम् । एव । तत् ॥ ११ ॥

**यत् पुरा परिवेषात् खादमाहरन्ति पुरोडाशावेव तौ ॥ १२ ॥**

यत् । पुरा । परिऽवेषात् । खादम् । आऽहरन्ति । पुरोडाशौ । एव । तौ ॥ १२ ॥

**यदशनकृतं ह्वयन्ति हविष्कृतमेव तद्ध्वयन्ति ॥ १३ ॥**

यत् । अशनऽकृतम् । ह्वयन्ति[१] । हविःऽकृतम् । एव । तत् । ह्वयन्ति ॥ १३ ॥

**ये व्रीहयो यवा निरुप्यन्तें[२]ऽशव एव ते ॥ १४ ॥**

ये । व्रीहयः । यवाः । निःऽउप्यन्ते । अंशवः । एव । ते ॥ १४ ॥

**यान्युलूखलमुसलानि ग्रावाण एव ते ॥ १५ ॥**

यानि । उलूखलऽमुसलानि । ग्रावाणः । एव । ते ॥ १५ ॥

**शूर्पं पवित्रं तुषा ऋजीषाभिषवणीरापः ॥ १६ ॥**

शूर्पम् । पवित्रम् । तुषाः । ऋजीषाः । अभिऽसवनीः । आपः ॥ १६ ॥

**स्रुग्[३] दर्विर्नेक्षणमायवनं द्रोणकलशाः कुम्भ्यो वायव्यानि पात्राणीयमेव कृष्णाजिनम् ॥ १७ ॥** (१५)

स्रुक् । दर्विः । नेक्षणम् । आऽयवनम् । द्रोणऽकलशाः । कुम्भ्यः । वायव्यानि । पात्राणि । इयम् । एव । कृष्णऽअजिनम् ॥ १७ ॥ (१५)

इति तृतीयेनुवाके द्वितीयं सूक्तम् ॥

---

१ P ह्वयन्ति ।. We with P² J Cp. २ B B^h Cs निरूप्य°. We with A D K^m R S^m V Dc P P² J Cp. ३ B^h स्रग्.

यजमानब्राह्मणं वा एतदतिथिपतिः कुरुते यदाहार्याणि प्रेक्षत इदं भूया३ इदा३मिति ॥ १ ॥

यजमानऽब्राह्मणम् । वै । एतत् । अतिथिऽपतिः । कुरुते । यत् । आऽहार्याणि । प्रऽईक्षते । इदम् । भूया३ः । इदा३म् । इति ॥ १ ॥

यदाह भूय उद्धरेति प्राणमेव तेन वर्षीयांसं कुरुते ॥ २ ॥

यत् । आह । भूयः । उत् । हर । इति । प्राणम् । एव । तेन । वर्षीयांसम् । कुरुते ॥ २ ॥

उप हरति हवींष्या सादयति ॥ ३ ॥

उप । हरति । हवींषि । आ । सादयति ॥ ३ ॥

तेषामासन्नानामतिथिरात्मन् जुहोति ॥ ४ ॥

तेषाम् । आऽसन्नानाम् । अतिथिः । आत्मन् । जुहोति ॥ ४ ॥

स्रुचा हस्तेन प्राणे यूपे स्रुक्कारेण वषट्कारेण ॥ ५ ॥

स्रुचा । हस्तेन । प्राणे । यूपे । स्रुक्ऽकारेण । वषट्ऽकारेण ॥ ५ ॥

एते वै प्रियाश्चाप्रियाश्चर्त्विजः स्वर्गं लोकं गमयन्ति यदतिथयः ॥ ६ ॥

एते । वै । प्रियाः । च । अप्रियाः । च । ऋत्विजः । स्वःऽगम् । लोकम् । गमयन्ति । यत् । अतिथयः ॥ ६ ॥

स य एवं विद्वान् न द्विषन्नश्नीयान्न द्विषतोन्नमश्नीयान्न मीमांसितस्य न मीमांसमानस्य ॥ ७ ॥

सः । यः । एवम् । विद्वान् । न । द्विषन् । अश्नीयात् । न । द्विषतः । अन्नम् । अश्नीयात् । न । मीमांसितस्य । न । मीमांसमानस्य ॥ ७ ॥

सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति ॥ ८ ॥

सर्वः । वै । एषः । जग्धऽपाप्मा । यस्य । अन्नम् । अश्नन्ति ॥ ८ ॥

सर्वो वा एषोऽजग्धपाप्मा यस्यान्नं नाश्नन्ति ॥ ९ ॥

सर्वः । वै । एषः । अजग्धऽपाप्मा । यस्य । अन्नम् । न । अश्नन्ति ॥ ९ ॥

---

१ K S V Dc भूया ३. P भूयाः ।. J Cp भूयाः । ३ ।. P भूयाः । ३. We with A B B D R Cs. २ B K Cs °रात्मं. R Dc °रात्मंञ्जु°. We A S V. ३ P गमयति ।. We with P J Cp.

सर्वदा वा एष युक्तग्रावार्द्रपवित्रो विततांध्वर आहृतयज्ञक्रतुर्य उपहरति ॥ १० ॥

सर्वदा । वै । एषः । युक्तऽग्रावा । आर्द्रऽपवित्रः । विततऽअध्वरः । आहृतऽयज्ञक्रतुः । यः । उपऽहरति ॥ १० ॥

प्राजापत्यो वा एतस्य यज्ञो विततो य उपहरति ॥ ११ ॥

प्राजाऽपत्यः । वै । एतस्य । यज्ञः । विऽततः । यः ।०॥ ११ ॥

प्रजापतेर्वा एष विक्रमाननुविक्रमते य उपहरति ॥ १२ ॥

प्रजाऽपतेः । वै । एषः । विऽक्रमान् । अनुऽविक्रमते । यः । उपऽहरति ॥ १२ ॥

योतिथीनां स आहवनीयो यो वेश्मनि स गार्हपत्यो यस्मिन् पचन्ति स दक्षिणाग्निः ॥ १३ ॥ (१६)

यः । अतिथीनाम् । सः । आऽहवनीयः । यः । वेश्मनि । सः । गार्हऽपत्यः । यस्मिन् । पचन्ति । सः । दक्षिणऽअग्निः ॥ १३ ॥ (१६)

इति तृतीयेनुवाके तृतीयं सूक्तम् ॥

इष्टं च वा एष पूर्तं च गृहाणामश्नाति यः पूर्वोतिथेरश्नाति ॥ १ ॥

इष्टम् । च । वै । एषः । पूर्तम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ १ ॥

पयश्च वा एष रसं च० ॥ २ ॥

पयः । च । वै । एषः । रसम् । च ।० ॥ २ ॥

ऊर्जां च वा एष स्फातिं च० ॥ ३ ॥

ऊर्जाम् । च । वै । एषः । स्फातिम् । च ।० ॥ ३ ॥

प्रजां च वा एष पशूंश्च० ॥ ४ ॥

प्रऽजाम् । च । वै । एषः । पशून् । च ।० ॥ ४ ॥

कीर्तिं च वा एष यशश्च० ॥ ५ ॥

कीर्तिम् । च । वै । एषः । यशः । च ।० ॥ ५ ॥

श्रियं च वा एष संविदं च गृहाणामश्नाति यः पूर्वोतिथेरश्नाति ॥ ६ ॥

---

१ B °यज्ञःक्र°.

श्रियम् । च । वै । एषः । सम्ऽविदम् । च । गृहाणाम् । अश्नाति । यः । पूर्वः । अतिथेः । अश्नाति ॥ ६ ॥

**एष वा अतिथिर्यच्छ्रोत्रियस्तस्मात् पूर्वो नाश्नीयात् ॥ ७ ॥**

एषः । वै । अतिथिः । यत् । श्रोत्रियः । तस्मात् । पूर्वः । न । अश्नीयात् ॥ ७ ॥

**अशितावत्यतिथावश्नीयाद् यज्ञस्य सात्मत्वाय यज्ञस्याविच्छेदाय तद् व्रतम् ॥ ८ ॥**

अशितऽवति । अतिथौ । अश्नीयात् । यज्ञस्य । सात्मऽत्वाय । यज्ञस्य । अविऽछेदाय । तत् । व्रतम् ॥ ८ ॥

**एतद् वा उ स्वादीयो यदधिगवं क्षीरं वा मांसं वा तदेव नाश्नीयात् ॥ ९ ॥(१७)**

एतत् । वै । ऊं इति । स्वादीयः । यत् । अधिऽगवम् । क्षीरम् । वा । मांसम् । वा । तत् । एव । न । अश्नीयात् ॥ ९ ॥ (१७)

इति तृतीयेनुवाके चतुर्थं सूक्तम् ॥

**स य एवं विद्वान् क्षीरमुपसिच्योपहरति ॥ १ ॥**

सः । यः । एवम् । विद्वान् । क्षीरम् । उपऽसिच्य । उपऽहरति ॥ १ ॥

**यावदग्निष्टोमेनेष्ट्वा सुसमृद्धेनावरुन्द्धे तावदेनेनाव रुन्द्धे ॥ २ ॥**

यावत् । अग्निऽस्तोमेन । इष्ट्वा । सुऽसमृद्धेन । अवऽरुन्द्धे । तावत् । एनेन । अव । रुन्द्धे ॥ २ ॥

**स य एवं विद्वान्त्सर्पिरुपसिच्योपहरति ॥ ३ ॥**

०। विद्वान् । सर्पिः । उपऽसिच्य ।०॥ ३ ॥

**यावदतिरात्रेणेष्ट्वा० ॥ ४ ॥**

यावत् । अतिऽरात्रेण । इष्ट्वा ।०॥ ४ ॥

**स य एवं विद्वान् मधूपसिच्योपहरति ॥ ५ ॥**

०। विद्वान् । मधु । उपऽसिच्य ।०॥ ५ ॥

**यावत् सत्त्रसद्येनेष्ट्वा० ॥ ६ ॥**

यावत् । सत्त्रऽसद्येन । इष्ट्वा ।०॥ ६ ॥

स य एवं विद्वान् मांसमुपसिच्योपहरति ॥ ७ ॥

०। विद्वान्। मांसम्। उपऽसिच्य ।०॥ ७॥

यावद् द्वादशाहेनेष्ट्वा सुसमृद्धेनावरुन्द्धे तावदेनेनाव रुन्द्धे ॥ ८ ॥

यावत्। द्वादशऽअहेन। इष्ट्वा। सुऽसमृद्धेन। अवऽरुन्द्धे। तावत्। एनेन। अव। रुन्द्धे ॥ ८ ॥

स य एवं विद्वानुदकमुपसिच्योपहरति ॥ ९ ॥

सः। यः। एवम्। विद्वान्। उदकम्। उपऽसिच्य। उपऽहरति ॥ ९ ॥

प्रजानां प्रजननाय गच्छति प्रतिष्ठां प्रियः प्रजानां भवति य एवं विद्वानु-
दकमुपसिच्योपहरति ॥ १० ॥ (१८)

प्रऽजानाम्। प्रऽजननाय। गच्छति। प्रतिऽस्थाम्। प्रियः। प्रऽजानाम्। भवति। यः।
एवम्। विद्वान्। उदकम्। उपऽसिच्य। उपऽहरति ॥ १० ॥ (१८)

इति तृतीयेनुवाके पञ्चमं सूक्तम् ॥

तस्मा उषा हिङ्कृणोति सविता प्र स्तौति ॥ १ ॥

तस्मै। उषाः। हिङ्। कृणोति। सविता। प्र। स्तौति ॥ १ ॥

बृहस्पतिरूर्जयोद्गायति त्वष्टा पुष्ट्या प्रति हरति विश्वे देवा निधनम् ॥२॥

बृहस्पतिः। ऊर्जया। उत्। गायति। त्वष्टा। पुष्ट्या। प्रति। हरति। विश्वे। देवाः।
निऽधनम् ॥ २ ॥

निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥ ३ ॥

निऽधनम्। भूत्याः। प्रऽजायाः। पशूनाम्। भवति। यः। एवम्। वेद ॥ ३ ॥

तस्मा उद्यन्त्सूर्यो हिङ्कृणोति संगवः प्र स्तौति ॥ ४ ॥

तस्मै। उत्ऽयन्। सूर्यः। हिङ्। कृणोति। सम्ऽगवः। प्र ।०॥ ४ ॥

मध्यन्दिन उद्गायत्यपराह्णः प्रति हरत्यस्तंयन्निधनम्।
निधनं० ॥ ५ ॥

मध्यन्दिनः। उत्। गायति। अपरऽअह्नः। प्रति। हरति। अस्तम्ऽयन्। निऽधनम्।
निऽधनम् ।०॥ ५ ॥

तस्मा अभ्रो भवन् हिङ्कृणोति स्तनयन् प्र स्तौति ॥ ६ ॥

तस्मै । अभ्रः । भवन् । हिङ् । कृणोति । स्तनयन् । प्र । स्तौति ॥ ६ ॥

विद्योतमानः प्रति हरति वर्षन्नुद्गायत्युद्गृह्णन् निधनम् ॥ निधनं० ॥ ७ ॥

विऽद्योतमानः । प्रति । हरति । वर्षन् । उत् । गायति । उत्ऽगृह्णन् ॥ निऽधनम् ।० ॥ ७ ॥

अतिथीन् प्रति पश्यति हिङ्कृणोत्यभि वदति प्र स्तौत्युदकं याचत्युद्गायति ॥ ८ ॥

अतिथीन् । प्रति । पश्यति । हिङ् । कृणोति । अभि । वदति । प्र । स्तौति । उदकम् । याचति । उत् । गायति ॥ ८ ॥

उप हरति प्रति हरत्युच्छिष्टं निधनम् ॥ ९ ॥

उप । हरति । प्रति । हरति । उत्ऽशिष्टम् । निऽधनम् ॥ ९ ॥

निधनं भूत्याः प्रजायाः पशूनां भवति य एवं वेद ॥ १० ॥ (१९)

निऽधनम् । भूत्याः । प्रऽजायाः । पशूनाम् । भवति । यः ।० ॥ १० ॥ (१९)

इति तृतीयेनुवाके षष्ठं सूक्तम् ॥

यत क्षत्तारं ह्वयत्या श्रावयत्येव तत् ॥ १ ॥

यत् । क्षत्तारम् । ह्वयति । आ । श्रावयति । एव । तत् ॥ १ ॥

यत् प्रतिशृणोति प्रत्याश्रावयत्येव तत् ॥ २ ॥

यत् । प्रतिऽशृणोति । प्रतिऽआश्रावयति । एव । तत् ॥ २ ॥

यत् परिवेष्टारः पात्रहस्ताः पूर्वे चापरे च प्रपद्यन्ते चमसाध्वर्यव एव ते ॥ ३ ॥

यत् । परिऽवेष्टारः । पात्रऽहस्ताः । पूर्वे । च । अपरे । च । प्रऽपद्यन्ते । चमसऽअध्वर्यवः । एव । ते ॥ ३ ॥

तेषां न कश्चनाहोता ॥ ४ ॥

तेषाम् । न । कः । चन । अहोता ॥ ४ ॥

यद् वा अतिथिपतिरतिथीन् परिविष्य गृहानुपोदैत्यवभृथमेव तदुपावैति ॥ ५ ॥

---

१ PP वर्षम् ।. We with J Cp. २ B वदति. ३ B K K R V Dc याच०. We with A B D S C P P J Cp. ४ P J कः ।.

यत् । वै । अतिथिऽपतिः । अतिथीन् । परिऽविष्य । गृहान् । उपऽउदैति । अवऽभृथम् ।
एव । तत् । उपऽअवैति ॥ ५ ॥

**यत् संभागयति दक्षिणाः सभागयति यदनुतिष्ठत उदवस्यत्येव तत् ॥६॥**

यत् । सभागयति । दक्षिणाः । सभागयति । यत् । अनुऽतिष्ठते । उत्ऽअवस्यति । एव ।
तत् ॥ ६ ॥

**स उपहूतः पृथिव्यां भक्षयत्युपहूतस्तस्मिन् यत् पृथिव्यां विश्वरूपम् ॥७॥**

सः । उपऽहूतः । पृथिव्याम् । भक्षयति । उपऽहूतः । तस्मिन् । यत् । पृथिव्याम् । वि-
श्वऽरूपम् ॥ ७ ॥

**स उपहूतोन्तरिक्षे भक्षयत्युपहूतस्तस्मिन् यदन्तरिक्षे विश्वरूपम् ॥ ८ ॥**

०। उपऽहूतः । अन्तरिक्षे । भक्षयति । उपऽहूतः । तस्मिन् । यत् । अन्तरिक्षे । विश्वऽरू-
पम् ॥ ८ ॥

**स उपहूतो दिवि भक्षयत्युपहूतस्तस्मिन् यद् दिवि विश्वरूपम् ॥ ९ ॥**

०। उपऽहूतः । दिवि । भक्षयति । उपऽहूतः । तस्मिन् । यत् । दिवि । विश्वऽरूपम् ॥ ९ ॥

**स उपहूतो देवेषु भक्षयत्युपहूतस्तस्मिन् यद् देवेषु विश्वरूपम् ॥ १० ॥**

०। उपऽहूतः । देवेषु । भक्षयति । उपऽहूतः । तस्मिन् । यत् । देवेषु । विश्वऽरूपम् ॥ १० ॥

**स उपहूतो लोकेषु भक्षयत्युपहूतस्तस्मिन् यल्लोकेषु विश्वरूपम् ॥ ११ ॥**

०। उपऽहूतः । लोकेषु । भक्षयति । उपऽहूतः । तस्मिन् । यत् । लोकेषु । विश्वऽरूपम् ॥ ११ ॥

**स उपहूत उपहूतः ॥ १२ ॥**

सः । उपऽहूतः । उपऽहूतः ॥ १२ ॥

**आप्नोतीमं लोकमाप्नोत्यमुम् ॥ १३ ॥**

आप्नोति । इमम् । लोकम् । आप्नोति । अमुम् ॥ १३ ॥

**ज्योतिष्मतो लोकान् जयति य एवं वेद ॥ १४ ॥** (२०)

---

१ P P[2] °उदैति ।. We with J Cp. २ P P[2] J °तिष्ठति ।. We with Cp. ३ So we with all our MSS. See Rw.

ज्योतिष्मतः । लोकान् । जयति । यः ।० ॥ १४ ॥ (२०)

तृतीयेनुवाके सप्तमं सूक्तम् ॥

इति तृतीयोनुवाकः ॥

"प्रजापतिश्च" इति सूक्तस्य गोष्ठकर्मणि विनियोग । "प्रजापतिरिति गोष्ठकर्माणि" इत्यादिसूत्रात् [ कौ॰ विस्तरस्तु "एह यन्तु पशव" इति सूक्ते [ २ २६ ] द्रष्टव्यः ॥

तथा अनडुत्सवे अनेन सूक्तेन निरुप्तहविरभिमर्शनं संपात दातृवाचनं दान च कुर्यात् । "प्रजापतिश्चेत्यनड्वा [ कौ॰ ८. ७ ] सूत्रात् ॥

वस्तुतस्तु मेध्यवृषभस्य यानि भिन्नभिन्नान्यङ्गानि तानि भिन्नभिन्नदेवतारूपाणि भवन्तीति तस्य प्रशसा ॥

**प्रजापतिश्च परमेष्ठी च शृङ्गे इन्द्रः शिरो अग्निर्ललाटं यमः टम् ॥ १ ॥**

प्रजाऽपतिः । च । परमेऽस्थी । च । शृङ्गे इति । इन्द्रः । शिरः । अग्निः । ल यमः । कृकाटम् ॥ १ ॥

**सोमो राजा मस्तिष्को द्यौरुत्तरहनुः पृथिव्यधरहनुः ॥ २ ॥**

सोमः । राजा । मस्तिष्कः । द्यौः । उत्तरऽहनुः । पृथिवी । अधरऽहनुः ॥ २ ॥

**विद्युज्जिह्वा मरुतो दन्ता रेवतीर्ग्रीवाः कृत्तिका स्कन्धा घर्मो वहः**

विऽद्युत् । जिह्वा । मरुतः । दन्ताः । रेवतीः । ग्रीवाः । कृत्तिकाः । स्कन्धाः वहः ॥ ३ ॥

**विश्वं वायुः स्वर्गो लोकः कृष्णद्रं विधरणी निवेष्यः ॥ ४ ॥**

विश्वम् । वायुः । स्वःऽगः । लोकः । कृष्णऽद्रम् । विऽधरणी । निऽवेष्यः ॥ ४

**श्येनः क्रोडोऽन्तरिक्षं पाजस्यं बृहस्पतिः ककुद् बृहतीः कीकसा**

श्येनः । क्रोडः । अन्तरिक्षम् । पाजस्यम् । बृहस्पतिः । ककुत् । बृहतीः । कीकसा

**देवानां पत्नीः पृष्टय उपसदः पर्शवः ॥ ६ ॥**

देवानाम् । पत्नीः । पृष्टयः । उपऽसदः । पर्शवः ॥ ६ ॥

**मित्रश्च वरुणश्चांसौ त्वष्टा चार्यमा च दोषणी महादेवो बाहू ॥**

१ P ललाट॰ ।. We with P J Cp. २ A B B K R V Dc Cs कृत्तिकाः स्कन्धा with D S. ३ R and Rw alone have निवेष्यः. ४ D K K S क्रोडोऽन्त॰. We V Dc Cs. ५ D S ॰स्यं. Dc ॰स्यं. We with B K K V Cs. ६ K P पृष्ठयः ।.

मित्रः । च । वरुणः । च । अंसौ । त्वष्टा । च । अर्यमा । च । दोषणी इति । महाऽदेवः । बाहू इति ॥ ७ ॥

**इन्द्राणी भसद् वायुः पुच्छं पवमानो बालाः ॥ ८ ॥**

इन्द्राणी । भसत् । वायुः । पुच्छम् । पवमानः । बालाः ॥ ८ ॥

**ब्रह्म च क्षत्रं च श्रोणी बलमूरू ॥ ९ ॥**

ब्रह्म । च । क्षत्रम् । च । श्रोणी इति । बलम् । ऊरू इति ॥ ९ ॥

**धाता च सविता चाष्ठीवन्तौ जङ्घा गन्धर्वा अप्सरसः कुष्ठिका अदितिः शफाः ॥ १० ॥**

धाता । च । सविता । च । अष्ठीवन्तौ । जङ्घाः । गन्धर्वाः । अप्सरसः । कुष्ठिकाः । अदितिः । शफाः ॥ १० ॥

**चेतो हृदयं यकृन्मेधा व्रतं पुरीतत् ॥ ११ ॥**

चेतः । हृदयम् । यकृत् । मेधा । व्रतम् । पुरिऽतत् ॥ ११ ॥

**क्षुत् कुक्षिरिरा वनिष्ठुः पर्वताः प्लाशयः ॥ १२ ॥**

क्षुत् । कुक्षिः । इरा । वनिष्ठुः । पर्वताः । प्लाशयः ॥ १२ ॥

**क्रोधो वृक्कौ मन्युराण्डौ प्रजा शेपः ॥ १३ ॥**

क्रोधः । वृक्कौ । मन्युः । आण्डौ । प्रऽजा । शेपः ॥ १३ ॥

**नदी सूत्री वर्षस्य पतय स्तना स्तनयित्नुरूधः ॥ १४ ॥**

नदी । सूत्री । वर्षस्य । पतयः । स्तनाः । स्तनयित्नुः । ऊधः ॥ १४ ॥

**विश्वव्यचाश्चर्मौषधयो लोमानि नक्षत्राणि रूपम् ॥ १५ ॥**

विश्वऽव्यचाः । चर्म । ओषधयः । लोमानि । नक्षत्राणि । रूपम् ॥ १५ ॥

**देवजना गुदा मनुष्या आन्त्राण्यत्रा उदरम् ॥ १६ ॥**

देवऽजनाः । गुदाः । मनुष्याः । आन्त्राणि । अत्राः । उदरम् ॥ १६ ॥

**रक्षांसि लोहितमितरजना ऊबध्यम् ॥ १७ ॥**

---

१ R वालाः. २ P उरू इति ।. ३ K $\overset{m}{K}$ $\overset{m}{S}$ V Dc विधाता. We with A B $\overset{h}{B}$ D R Cs P $\overset{2}{P}$ J Cp. ४ All our authorities have वनिष्ठुः. ($\overset{m}{K}$ seems to read वनिषुः.) ५ A $\overset{m}{K}$ R $\overset{m}{S}$ $\overset{2}{P}$ J Dc वृक्कौ. We with $\overset{h}{B}$ D K V Cs P Cp. ६ $\overset{m}{K}$ ॰रण्डौ. ७ $\overset{m}{K}$ ॰वं॰

रक्षांसि । लोहितम् । इतरऽजनाः । ऊबध्यम् ॥ १७ ॥

अभ्रं पीबो[1] मज्जा निधनम् ॥ १८ ॥

अभ्रम् । पीवः । मज्जा । निऽधनम् ॥ १८ ॥

अग्निरासीन उत्थितोश्विना ॥ १९ ॥

अग्निः । आसीनः । उत्थितः । अश्विना ॥ १९ ॥

इन्द्रः प्राङ् तिष्ठन् दक्षिणा तिष्ठन् यमः ॥ २० ॥

इन्द्रः । प्राङ् । तिष्ठन् । दक्षिणा[2] । तिष्ठन् । यमः ॥ २० ॥

प्रत्यङ् तिष्ठन् धातोदङ् तिष्ठन्त्सविता ॥ २१ ॥

प्रत्यङ् । तिष्ठन्[3] । धाता । उदङ् । तिष्ठन् । सविता ॥ २१ ॥

तृणानि प्राप्तः सोमो राजा ॥ २२ ॥

तृणानि । प्रऽआप्तः[4] । सोमः । राजा ॥ २२ ॥

मित्र ईक्षमाण आवृत्त आनन्दः ॥ २३ ॥

मित्रः । ईक्षमाणः । आऽवृत्तः । आऽनन्दः ॥ २३ ॥

युज्यमानो वैश्वदेवो युक्तः प्रजापतिर्विमुक्तः सर्वम् ॥ २४ ॥

युज्यमानः । वैश्वऽदेवः । युक्तः । प्रजाऽपतिः । विऽमुक्तः । सर्वम् ॥ २४ ॥

एतद् वै विश्वरूपं सर्वरूपं गोरूपम् ॥ २५ ॥

एतत् । वै । विश्वऽरूपम् । सर्वऽरूपम् । गोऽरूपम् ॥ २५ ॥

उपैनं विश्वरूपाः सर्वरूपाः पशवस्तिष्ठन्ति य एवं वेद ॥ २६ ॥ (२१)

उप । एनम् । विश्वऽरूपाः । सर्वऽरूपाः । पशवः । तिष्ठन्ति । यः । एवम् । वेद ॥ २६ ॥ (२१)

इति चतुर्थेनुवाके प्रथमं सूक्तम् ॥

शिरोरोगादिसर्वभैषज्ये कर्मणि "शीर्षक्तिम्" इत्यर्थसूक्तेन व्याधितशरीरम् अभिमृशति। ततः "पादाभ्यां ते" इति द्वाभ्याम् ऋग्भ्याम् आदित्यम् उपतिष्ठते । तथा च सूत्रम् । "शीर्षक्तिम् इत्यभिमृशति । उत्तमाभ्याम् [२१, २२] आदित्यम् उपतिष्ठते" इति [कौ° ४. ८] ॥

---

१ D K $\overset{m}{K}$ P पीबो. We with A $\overset{h}{B}$ K R $\overset{m}{S}$ Dc Cs and $\overset{2}{P}$ J Cp. २ P दक्षिणा I. We with $\overset{2}{P}$ J Cp. ३ $\overset{2}{P}$ तिष्ठम् I. We with P J Cp. ४ P °आप्ताः I. We with $\overset{2}{P}$ J Cp

तथा अस्य सूक्तस्य अहोलिङ्गगणे पाठात् तस्य गणस्य यत्रयत्र सर्वव्याधिभैषज्यादिषु विनियोग उक्तस्तत्र सर्वत्रास्य विनियोगोनुसंधेयः । विस्तरस्तु “अक्षीभ्याम्” इति सूक्ते [२. ३३] द्रष्टव्यः ।

शीर्षक्तिं शीर्षामयं कर्णशूलं विलोहितम् ।
सर्वं शीर्षण्यं१ ते रोगं बहिर्निर्मन्त्रयामहे ॥ १ ॥

शीर्षक्तिम् । शीर्षऽआमयम् । कर्णऽशूलम् । विऽलोहितम्[१] ।
सर्वम् । शीर्षण्यम् । ते । रोगम् । बहिः । निः । मन्त्रयामहे ॥ १ ॥

कर्णाभ्यां ते कङ्कूषेभ्यः कर्णशूलं विसल्पकम् । सर्वं० ॥ २ ॥

कर्णाभ्याम् । ते । कङ्कूषेभ्यः । कर्णऽशूलम् । विऽसल्पकम् ।० ॥ २ ॥

यस्य हेतोः प्रच्यवते यक्ष्मः कर्णत आस्यतः । सर्वं० ॥ ३ ॥

यस्य । हेतोः । प्रऽच्यवते । यक्ष्मः । कर्णतः । आस्यतः ।० ॥ ३ ॥

यः कृणोति प्रमोतमन्धं कृणोति[३] पूरुषम् । सर्वं० ॥ ४ ॥

यः । कृणोति । प्रऽमोतम् । अन्धम् । कृणोति । पुरुषम् ।० ॥ ४ ॥

अङ्गभेदमङ्गज्वरं विश्वाङ्ग्यं विसल्पकम् ।
सर्वं शीर्षण्यं ते रोगं बहिर्निर्मन्त्रयामहे ॥ ५ ॥

अङ्गऽभेदम् । अङ्गऽज्वरम् । विश्वऽअङ्ग्यम् । विऽसल्पकम् ।
सर्वम् । शीर्षण्यम् । ते । रोगम् । बहिः ।० ॥ ५ ॥

यस्य भीमः प्रतीकाश उद्वेपयति पूरुषम् ।
तक्मानं विश्वशारदं बहि० ॥ ६ ॥

यस्य । भीमः । प्रतिऽकाशः । उत्ऽवेपयति । पुरुषम् ।
तक्मानम् । विश्वऽशारदम् । बहिः ।० ॥ ६ ॥

य ऊरू अनुसर्पत्यथो एति गवीनिके ।
यक्ष्मं ते अन्तरङ्गेभ्यो बहि० ॥ ७ ॥

यः । ऊरू इति । अनुऽसर्पति । अथो इति । एति । गवीनिके इति ।
यक्ष्मम् । ते । अन्तः । अङ्गेभ्यः । बहिः ।० ॥ ७ ॥

---

१ P² विऽलोहितम् । We with P J Cp. २ So we with all our MSS. See Rw.
३ K K̈ᵐ V Dc P कृणोति. We with A B B̈ʰ D R S̈ᵐ Cs P̈² J Cp.

यदि कामादपकामाद्धृदयाज्जायते परि ।
हृदो बलासमङ्गेभ्यो बहि० ॥ ८ ॥

यदि । कामात् । अपऽकामात् । हृदयात् । जायते । परि ।
हृदः । बलासम् । अङ्गेभ्यः । बहिः ।० ॥ ८ ॥

हरिमाणं ते अङ्गेभ्योऽप्वामन्तरोदरात् ।
यक्ष्मोधामन्तरात्मनो बहिर्निर्मन्त्रयामहे ॥ ९ ॥

हरिमाणम् । ते । अङ्गेभ्यः । अप्वाम् । अन्तरा । उदरात् ।
यक्ष्मःऽधाम् । अन्तः । आत्मनः । बहिः । निः । मन्त्रयामहे ॥ ॥ ९ ॥

आसो बलासो भवतु मूत्रं भवत्वामयत् ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ १० ॥ (२२)

आसः । बलासः । भवतु । मूत्रम् । भवतु । आमयत् ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १० ॥ (२२)

बहिर्बिलं निर्द्रवतु काहाबाहं तवोदरात् । यक्ष्माणां० ॥ ११ ॥

बहिः । बिलम् । निः । द्रवतु । काहाबाहम् । तव । उदरात् ॥० ॥ ११ ॥

उदरात् ते क्लोम्नो नाभ्या हृदयादधि ।
यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ १२ ॥

उदरात् । ते । क्लोम्नः । नाभ्याः । हृदयात् । अधि ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १२ ॥

याः सीमानं विरुजन्ति मूर्धानं प्रत्यर्षणीः ।
अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥ १३ ॥

याः । सीमानम् । विऽरुजन्ति । मूर्धानम् । प्रति । अर्षणीः ।
अहिंसन्तीः । अनामयाः । निः । द्रवन्तु । बहिः । बिलम् ॥ १३ ॥

या हृदयमुपर्षन्त्यनुतन्वन्ति कीकसाः । अहिं० ॥ १४ ॥

---

१ B D K[m] यक्ष्मो°. २ P अर्षणीः ।. ३ A D R K[m] °मुपत्रृष° here and in the following two verses. We with B[h] K S[m] V Dc Cs.

याः । हृदयम् । उपऽऋषन्ति । अनुऽतन्वन्ति । कीकसाः ।० ॥ १४ ॥

**याः पार्श्वे उपर्षन्त्यनुनिक्षन्ति पृष्टीः । अहिं० ॥ १५ ॥**

याः । पार्श्वे इति । उपऽऋषन्ति । अनुऽनिक्षन्ति । पृष्टीः ।० ॥ १५ ॥

**यास्तिरश्चीरुपर्षन्त्यर्षणीर्वक्षणासु ते । अहिं० ॥ १६ ॥**

याः । तिरश्चीः । उपऽऋषन्ति । अर्षणीः । वक्षणासु । ते ।० ॥ १६ ॥

**या गुदा अनुसर्पन्त्यान्त्राणि मोहयन्ति च । अहिं० ॥ १७ ॥**

याः । गुदाः । अनुऽसर्पन्ति । आन्त्राणि । मोहयन्ति । च ।० ॥ १७ ॥

**या मज्ज्ञो निर्धयन्ति परूंषि विरुजन्ति च ।**
**अहिंसन्तीरनामया निर्द्रवन्तु बहिर्बिलम् ॥ १८ ॥**

याः । मज्ज्ञः । निःऽधयन्ति । परूंषि । विऽरुजन्ति । च ।
अहिंसन्तीः । अनामयाः । निः । द्रवन्तु । बहिः । बिलम् ॥ १८ ॥

**ये अङ्गानि मदयन्ति यक्ष्मासो रोपणास्तव ।**
**यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ १९ ॥**

ये । अङ्गानि । मदयन्ति । यक्ष्मासः । रोपणाः । तव ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ १९ ॥

**विसल्पस्य विद्रधस्य वातीकारस्य वालजेः ।**
**यक्ष्माणां सर्वेषां विषं निरवोचमहं त्वत् ॥ २० ॥**

विऽसल्पस्य । विऽद्रधस्य । वातीऽकारस्य । वा । अलजेः ।
यक्ष्माणाम् । सर्वेषाम् । विषम् । निः । अवोचम् । अहम् । त्वत् ॥ २० ॥

**पादाभ्यां ते जानुभ्यां श्रोणिभ्यां परि भंससः ।**
**अनूकादर्षणीरुष्णिहाभ्यः शीर्ष्णो रोगमनीनशम् ॥ २१ ॥**

पादाभ्याम् । ते । जानुऽभ्याम् । श्रोणिऽभ्याम् । परि । भंससः ।
अनूकात् । अर्षणीः । उष्णिहाभ्यः । शीर्ष्णः । रोगम् । अनीनशम् ॥ २१ ॥

---

१ B D K K̄ V Cs P Cp पृष्ठीः. S̄ Dc पृष्टीः changed to पृष्ठीः. We with A B̄ R P̄ J.
२ A B B̄ D K K̄ R S̄ V Dc Cs P P̄ J Cp मज्ञो. ३ P बलम्।. ४ B D S̄ येङ्गानि. ५ So we with all our authorities. See Rw.

सं ते शीर्ष्णः कपालानि हृदयस्य च यो विधुः ।
उद्यन्नादित्य रश्मिभिः शीर्ष्णो रोगमनीनशोङ्गभेदमशीशमः ॥२२॥(२३)

सम् । ते । शीर्ष्णः । कपालानि । हृदयस्य । च । यः । विधुः ।
उत्ऽयन् । आदित्य । रश्मिऽभिः । शीर्ष्णः । रोगम् । अनीनशः । अङ्गऽभेदम् । अशीशमः ॥ २२ ॥ (२३)

चतुर्थेनुवाके द्वितीयं सूक्तम् ॥

इति चतुर्थोनुवाकः ॥

"अस्य वामस्य" इत्यनुवाकस्य सलिलगणमध्ये पाठः । अतः "°सलिलैः क्षीरौदनम् अश्नाति । मन्थान्तानि" इति [कौ° ३. १] "सलिलैः सर्वकामः" [कौ° ३. ७] इत्यादावस्य विनियोगः ॥ सलिलगणश्च "आपो हि ष्ठा" इति सूक्ते [१. ५] द्रष्टव्यः ॥

अस्य वामस्येति सूक्तमन्त्रा ऋगन्तर्भूते तस्मिन्नेव सूक्ते [ऋ० १६४] दृष्टाः । तत्र तद्भाष्यं सायणीयं द्रष्टव्यम् ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥ १ ॥

अस्य । वामस्य । पलितस्य । होतुः । तस्य । भ्राता । मध्यमः । अस्ति । अश्नः ।
तृतीयः । भ्राता । घृतऽपृष्ठः । अस्य । अत्र । अपश्यम् । विश्पतिम् । सप्तऽपुत्रम् ॥ १ ॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥ २ ॥

सप्त । युञ्जन्ति । रथम् । एकऽचक्रम् । एकः । अश्वः । वहति । सप्तऽनामा ।
त्रिऽनाभि । चक्रम् । अजरम् । अनर्वम् । यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः ॥ २ ॥

इमं रथमधि ये सप्त तस्थुः सप्तचक्रं सप्त वहन्त्यश्वाः ।
सप्त स्वसारो अभि सं नवन्त यत्र गवां निहिता सप्त नामा ॥ ३ ॥

इमम् । रथम् । अधि । ये । सप्त । तस्थुः । सप्तऽचक्रम् । सप्त । वहन्ति । अश्वाः ।
सप्त । स्वसारः । अभि । सम् । नवन्त । यत्र । गवाम् । निऽहिता । सप्त । नाम ॥ ३ ॥

को ददर्श प्रथमं जायमानमस्थन्वन्तं यदनस्था बिभर्ति ।

---

१ P P̊ J विदुः ।. Cp विऽधुः ।. २ P अस्ति. We with P̊ J Cp. ३ B सप्तनामा. ४ P̊ J Cp नामा ।. We with P. ५ Bʰ Kᵐ Sᵐ Cs P J बिभर्ति. Dc बिभ° changed to बिभं°. J बिभर्ति । changed to बिभर्ति ।. We with A Bʰ D K V P̊ Cp.

भूम्या असुरसृगात्मा क्व स्वित् को विद्वांसमुप गात् प्रष्टुमेतत् ॥ ४ ॥

कः। ददर्श। प्रथमम्। जायमानम्। अस्थन्ऽवन्तम्। यत्। अनस्था। बिभर्ति। भूम्याः। असुः। असृक्। आत्मा। क्व। स्वित्। कः। विद्वांसम्। उप। गात्। प्रष्टुम्। एतत् ॥ ४ ॥

इह ब्रवीतु य ईमङ्ग वेदास्य वामस्य निहितं पदं वेः।
शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥ ५ ॥

इह। ब्रवीतु। यः। ईम्। अङ्ग। वेद। अस्य। वामस्य। निऽहितम्। पदम्। वेः। शीर्ष्णः। क्षीरम्। दुह्रते। गावः। अस्य। वव्रिम्। वसानाः। उदकम्। पदा। अपुः[1] ॥ ५ ॥

पाकः पृच्छामि मनसाविजानन् देवानामेना निहिता पदानि[2]।
वत्से बष्कयेधि सप्त तन्तून् वि तत्निरे कवय ओतवा उ ॥ ६ ॥

पाकः। पृच्छामि। मनसा। अविऽजानन्। देवानाम्। एना। निऽहिता। पदानि। वत्से। बष्कये। अधि। सप्त। तन्तून्। वि। तत्निरे। कवयः। ओतवै। ऊं इति ॥ ६ ॥

अचिकित्वांश्चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मनो न विद्वान्।
वि यस्तस्तम्भ षडिमा रजांस्यजस्य रूपे किमपि स्विदेकम् ॥ ७ ॥

अचिकित्वान्। चिकितुषः। चित्। अत्र। कवीन्। पृच्छामि। विद्मनः। न। विद्वान्। वि। यः। तस्तम्भ। षट्। इमा। रजांसि। अजस्य। रूपे। किम्। अपि। स्वित्। एकम् ॥ ७ ॥

माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे।
सा बीभत्सुर्गर्भरसा निविद्धा नमस्वन्त इदुपवाकमीयुः ॥ ८ ॥

माता। पितरम्। ऋते। आ। बभाज। धीती। अग्रे। मनसा। सम्। हि। जग्मे। सा। बीभत्सुः। गर्भऽरसा। निऽविद्धा। नमस्वन्तः। इत्। उपऽवाकम्। ईयुः ॥ ८ ॥

युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद् गर्भो वृजनीष्वन्तः।
अमीमेद् वत्सो अनु गामपश्यद् विश्वरूप्यं त्रिषु योजनेषु ॥ ९ ॥

युक्ता। माता। आसीत्। धुरि। दक्षिणायाः। अतिष्ठत्। गर्भः। वृजनीषु। अन्तः।

---

[1] K आपुः। J आपुः। changed to अपुः। P P² Cp अपुः। [2] B^h S^m ॰विजानन्.

अमीमेत् । वत्सः । अनु । गाम् । अपश्यत् । विश्वऽरूप्यम् । त्रिषु । योजनेषु ॥ ९ ॥

तिस्रो मातृस्त्रीन् पितॄन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्त[1] ।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदो वाचमविश्वविन्नाम् ॥ १० ॥(२४)

तिस्रः । मातृः । त्रीन् । पितॄन् । बिभ्रत् । एकः । ऊर्ध्वः । तस्थौ । न । ईम् । अव । ग्लपयन्त ।
मन्त्रयन्ते । दिवः । अमुष्य । पृष्ठे । विश्वऽविदः । वाचम् । अविश्वऽविन्नाम् ॥ १० ॥ (२४)

पञ्चारे चक्रे परिवर्तमाने यस्मिन्नातस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न च्छिद्यते सनाभिः ॥ ११ ॥

पञ्चऽअरे । चक्रे । परिऽवर्तमाने । यस्मिन् । आऽतस्थुः । भुवनानि । विश्वा ।
तस्य । न । अक्षः । तप्यते । भूरिऽभारः । सनात् । एव । न । छिद्यते । सऽनाभिः ॥ ११ ॥

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् ।
अथेमे अन्य उपरे विचक्षणे सप्तचक्रे षडर आहुरर्पितम् ॥ १२ ॥

पञ्चऽपादम् । पितरम् । द्वादशऽआकृतिम् । दिवः । आहुः । परे । अर्धे । पुरीषिणम् ।
अथ । इमे । अन्ये । उपरे । विऽचक्षणे । सप्तऽचक्रे । षट्ऽअरे । आहुः । अर्पितम् ॥ १२ ॥

द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परि द्यामृतस्य ।
आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥ १३ ॥

द्वादशऽअरम् । नहि । तत् । जराय । वर्वर्ति । चक्रम् । परि । द्याम् । ऋतस्य ।
आ । पुत्राः । अग्ने । मिथुनासः । अत्र । सप्त । शतानि । विंशतिः । च । तस्थुः ॥ १३ ॥

सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहन्ति ।
सूर्यस्य चक्षू[2] रजसैत्यावृतं यस्मिन्नातस्थुर्भुवनानि विश्वा ॥ १४ ॥

सऽनेमि । चक्रम् । अजरम् । वि । ववृते । उत्तानायाम् । दश । युक्ताः । वहन्ति ।
सूर्यस्य । चक्षुः । रजसा । एति । आऽवृतम् । यस्मिन् । आऽतस्थुः । भुवनानि । विश्वा ॥ १४ ॥

स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।
कविर्यः पुत्रः स ईमा[3] चिकेत यस्ता विजानात् स पितुष्पितासत् ॥ १५ ॥

---

१ A alone has the *Rgveda* reading ग्लापयन्ति. २ B $\overset{h}{\text{B}}$ $\overset{m}{\text{K}}$ चक्षु. Dc चक्षू changed to चक्षु. ३ B इमा.

स्त्रियः । सतीः । तान् । ऊं इति । मे । पुंसः । आहुः । पश्यत् । अक्षण्ऽवान् । न । वि । चेतत् । अन्धः ।

कविः । यः । पुत्रः । सः । ईम् । आ । चिकेत । यः । ता । विऽजानात् । सः । पितुः । पिता । असत्[1] ॥ १५ ॥

**साकंजानां सप्तथमाहुरेकजं षडिद्यमा ऋषयो देवजा इति ।**

**तेषामिष्टानि विहितानि धामश स्थात्रे रेजन्ते विकृतानि रूपशः ॥१६॥**

साकम्ऽजानाम् । सप्तथम् । आहुः । एकऽजम् । षट् । इत् । यमाः । ऋषयः । देवऽजाः । इति ।

तेषाम् । इष्टानि । विऽहितानि । धामऽशः । स्थात्रे[2] । रेजन्ते । विऽकृतानि । रूपऽशः ॥ १६ ॥

**अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात् ।**

**सा कद्रीची कं स्विदर्धं परागात् क्व स्वित् सूते नहि यूथे अस्मिन् ॥१७॥**

अवः । परेण । परः । एना । अवरेण । पदा । वत्सम् । विभ्रती । गौः । उत् । अस्थात् । सा । कद्रीची । कम् । स्वित् । अर्धम् । परा । अगात् । क्व । स्वित् । सूते । नहि । यूथे । अस्मिन् ॥ १७ ॥

**अवः परेण पितरं यो अस्य वेदावः परेण पर एनावरेण ।**

**कवीयमानः क इह प्र वोचद् देवं मनः कुतो अधि प्रजातम् ॥ १८ ॥**

अवः । परेण । पितरम् । यः । अस्य । वेद । अवः । परेण । परः । एना । अवरेण । कविऽयमानः । कः । इह । प्र । वोचत् । देवम् । मनः । कुतः । अधि । प्रऽजातम् ॥ १८ ॥

**ये अर्वाञ्चस्ताँ उ पराच आहुर्ये पराञ्चस्ताँ उ अर्वाच आहुः ।**

**इन्द्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहन्ति ॥ १९ ॥**

ये । अर्वाञ्चः । तान् । ऊं इति । पराचः । आहुः । ये । पराञ्चः । तान् । ऊं इति । अर्वाचः । आहुः ।

इन्द्रः । च । या । चक्रथुः । सोम । तानि । धुरा । न । युक्ताः । रजसः । वहन्ति ॥ १९ ॥

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते ।**

---

१ P आसत् ।. २ B K^m धामशः स्थात्रे.

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥ २० ॥

द्वा । सुऽपर्णा । सऽयुजा । सखाया । समानम् । वृक्षम् । परि । सस्वजाते इति ।
तयोः । अन्यः । पिप्पलम् । स्वादु । अत्ति । अनश्नन् । अन्यः । अभि । चाकशीति ॥ २० ॥

यस्मिन् वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधि विश्वे ।
तस्य यदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद ॥ २१ ॥

यस्मिन् । वृक्षे । मधुऽअदः । सुऽपर्णाः । निऽविशन्ते । सुवते । च । अधि । विश्वे ।
तस्य । यत् । आहुः । पिप्पलम् । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरम् । न । वेद ॥ २१ ॥

यत्रा सुपर्णा अमृतस्य भक्षमनिमेषं विदथाभिस्वरन्ति ।
एना विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥२२॥(२५)

यत्र ऽ सुऽपर्णाः । अमृतस्य । भक्षम् । अनिऽमेषम् । विदथा । अभिऽस्वरन्ति ।
एना । विश्वस्य । भुवनस्य । गोपाः । सः । मा । धीरः । पाकम् । अत्र । आ । विवेश ॥ २२॥(२५)

इति पञ्चमेनुवाके प्रथमं सूक्तम् ॥

"यद् गायत्रे" इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ॥

यद् गायत्रे अधि गायत्रमाहितं त्रैष्टुभं वा त्रैष्टुभान्निरतक्षत ।
यद्वा जगज्जगत्याहितं पदं य इत् तद् विदुस्ते अमृतत्वमानशुः ॥ १ ॥

यत् । गायत्रे । अधि । गायत्रम् । आऽहितम् । त्रैस्तुभम् । वा । त्रैस्तुभात् । निःऽअतक्षत ।
यत् । वा । जगत् । जगति । आऽहितम् । पदम् । ये । इत् । तत् । विदुः । ते । अमृतऽत्वम् । आनशुः ॥ १ ॥

गायत्रेण प्रति मिमीते अर्कमर्केण साम त्रैष्टुभेन वाकम् ।
वाकेन वाकं द्विपदा चतुष्पदाक्षरेण मिमते सप्त वाणीः ॥ २ ॥

गायत्रेण । प्रति । मिमीते । अर्कम् । अर्केण । साम । त्रैस्तुभेन । वाकम् ।
वाकेन । वाकम् । द्विऽपदा । चतुःऽपदा । अक्षरेण । मिमते । सप्त । वाणीः ॥ २ ॥

---

१ A B[h] R S[m] and J पिष्पलं. We with D K K[m] V Dc Cs and P P[2] Cp. २ A R J Cp पिष्पलं. We with B[h] D K K[m] S[m] V Dc Cs P P[2]. ३ P आहुः ।. ४ P आनशुः ।.

जगता सिन्धुं दिव्य॑स्कभायद् रथंतरे सूर्यं पर्यपश्यत् ।
गायत्रस्य॑ समिधस्तिस्र आ॑हुस्ततो॑ मह्ना प्र रि॑रिचे महित्वा ॥ ३ ॥

जग॑ता । सिन्धु॑म् । दि॒वि । अ॒स्क॒भा॒य॒त् । र॒थ॒म्ऽत॒रे । सूर्य॑म् । परि॑ । अ॒प॒श्य॒न् ।
गा॒य॒त्रस्य॑ । स॒म्ऽइध॑ः । ति॒स्रः । आ॒हुः॒ । तत॑ः । म॒ह्ना । प्र । रि॒रि॒चे॒ । म॒हि॒ऽत्वा ॥ ३ ॥

उप॑ ह्वये सुदुघां॑ धेनुमेतां सुहस्तो॑ गोधुगुत दो॑हदेनाम् ।
श्रेष्ठं सवं स॑विता सा॑विषन्नोभी॑द्धो घर्मस्तदु षु प्र वोचत् ॥ ४ ॥

उप॑ । ह्व॒ये॒ । सु॒ऽदुघा॑म् । धे॒नुम् । ए॒ताम् । सु॒ऽहस्त॑ः । गो॒ऽधुक् । उ॒त । दो॒ह॒त् । ए॒ना॒म् ।
श्रेष्ठ॑म् । स॒वम् । स॒वि॒ता । सा॒वि॒ष॒त् । न॒ः । अ॒भिऽइ॑द्धः । घ॒र्मः । तत् । ऊं इति॑ । सु ।
प्र । वो॒च॒त् ॥ ४ ॥

हिङ्कृण्वती व॑सुपत्नी वसू॑नां वत्समिच्छन्ती मन॑साभ्यागा॑त् ।
दुहामश्विभ्यां॑ पयो॑ अघ्न्येयं सा व॑र्धतां महते सौभ॑गाय ॥ ५ ॥

हि॒ङ्ऽकृ॒ण्व॒ती । व॒सु॒ऽप॒त्नी॑ । वसू॑नाम् । व॒त्सम् । इ॒च्छन्ती॑ । मन॑सा । अ॒भि॒ऽआ॒गा॑त् ।
दु॒हाम् । अ॒श्वि॒ऽभ्या॑म् । पय॑ः । अ॒घ्न्या । इ॒यम् । सा । व॒र्धता॑म् । म॒ह॒ते । सौभ॑गाय ॥ ५ ॥

गौर॑मीमेद॒भि व॒त्सं मिषन्तं॑ मू॒र्धानं॑ हिङ्[1]कृणोन्मात॒वा उं ।
सृक्वा॑णं घर्ममभि वा॑वशाना मिमा॑ति मायुं पयते पयो॑भिः ॥ ६ ॥

गौः । अ॒मी॒मे॒त् । अ॒भि । व॒त्सम् । मि॒षन्त॑म् । मू॒र्धान॑म् । हिङ् । अ॒कृ॒णो॒त् । मा-
त॒वै । ऊं इति॑ ।
सृक्वा॑णम् । घ॒र्मम् । अ॒भि । वा॒व॒शा॒ना । मि॒मा॑ति । मा॒युम् । पय॑ते । पय॑ःऽभिः ॥ ६ ॥

अयं स शिङ्क्ते येन गौरभीवृ॑ता मिमा॑ति मायुं ध्वसनावधि श्रिता ।
सा चित्तिभिर्नि हि चकार मर्त्यान् विद्युद्भवन्ती प्रति वव्रिमौहत[2] ॥ ७ ॥

अ॒यम् । सः । शि॒ङ्क्ते । येन॑ । गौः । अ॒भिऽवृ॑ता । मि॒मा॑ति । मा॒युम् । ध्व॒सनौ॑ । अधि॑ । श्रि॒ता ।
सा । चि॒त्तिऽभि॑ः । नि । हि । च॒कार॑ । मर्त्या॑न् । वि॒ऽद्युत् । भव॑न्ती । प्रति॑ । व॒व्रिम् ।
औ॒ह॒त॒ ॥ ७ ॥

अनच्छये तुरगा॑तु जीवमेज॑द् ध्रुवं मध्य आ पस्त्या॑नाम् ।

१ All our authorities have हिङ्क्कृ°. २ B D °मौहत्. R Dc Cs °हत् changed to °हत. We with A B^h K K^m S^m V P P^i J Cp.

जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ८ ॥

अनत् । शये । तुरऽगांतु । जीवम् । एजंत् । ध्रुवम् । मध्ये । आ । पस्त्यानाम् ।
जीवः । मृतस्य । चरति । स्वधाभिः । अमर्त्यः । मर्त्येन । सऽयोनिः ॥ ८ ॥

विधुं दद्राणं सलिलस्य पृष्ठे युवानं सन्तं पलितो जंगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ ९ ॥

विऽधुम् । दद्राणम् । सलिलस्य । पृष्ठे । युवानम् । सन्तम् । पलितः । जगार ।
देवस्य । पश्य । काव्यम् । महिऽत्वा । अद्य । ममार । सः । ह्यः । सम् । आन ॥ ९ ॥

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् ।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिरा विवेश ॥ १० ॥ (२६)

यः । ईम् । चकार । न । सः । अस्य । वेद । यः । ईम् । ददर्श । हिरुक् । इत् ।
नु । तस्मात् ।
सः । मातुः । योना । परिऽवीतः । अन्तः । बहुऽप्रजाः । निःऽऋतिः । आ । विवेश ॥ १० ॥(२६)

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ॥ ११ ॥

अपश्यम् । गोपाम् । अनिऽपद्यमानम् । आ । च । परा । च । पथिऽभिः । चरन्तम् ।
सः । सध्रीचीः । सः । विषूचीः । वसानः । आ । वरीवर्ति । भुवनेषु । अन्तः ॥ ११ ॥

द्यौर्नः पिता जनिता नाभिरत्र बन्धुर्नो माता पृथिवी महीयम् ।
उत्तानयोश्चम्वो३र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥ १२ ॥

द्यौः । नः । पिता । जनिता । नाभिः । अत्र । बन्धुः । नः । माता । पृथिवी । मही । इयम् ।
उत्तानयोः । चम्वोः[१] । योनिः । अन्तः । अत्र । पिता । दुहितुः । गर्भम् । आ । अधात् ॥ १२ ॥

पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि वृष्णो अश्वस्य रेतः ।
पृच्छामि विश्वस्य भुवनस्य नाभिं पृच्छामि वाचः परमं व्योम ॥१३॥

पृच्छामि । त्वा । परम् । अन्तम् । पृथिव्याः । पृच्छामि । वृष्णः । अश्वस्य । रेतः ।
पृच्छामि । विश्वस्य । भुवनस्य । नाभिम् । पृच्छामि । वाचः । परमम् । विऽओम ॥१३॥

---

१ K $K^{m}$ °चम्वो:°. We with $B^{h}$ D R $S^{m}$ V Dc Cs.

इयं वेदिः परो अन्तः पृथिव्या अयं सोमो वृष्णो अश्वस्य रेतः ।
अयं यज्ञो विश्वस्य भुवनस्य नाभिर्ब्रह्मायं वाचः परमं व्योम ॥ १४ ॥

इयम् । वेदिः । परः । अन्तः । पृथिव्याः । अयम् । सोमः । वृष्णः । अश्वस्य । रेतः ।
अयम् । यज्ञः । विश्वस्य । भुवनस्य । नाभिः । ब्रह्मा । अयम् । वाचः । परमम् ।
विऽओम ॥ १४ ॥

न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि ।
यदा मागन् प्रथमजा ऋतस्यादिद् वाचो अश्नुवे भागमस्याः ॥ १५ ॥

न । वि । जानामि । यत्ऽइव । इदम् । अस्मि । निण्यः । सम्ऽनद्धः । मनसा । चरामि ।
यदा । मा । आऽअगन् । प्रथमऽजाः । ऋतस्य । आत् । इत् । वाचः । अश्नुवे । भागम् ।
अस्याः ॥ १५ ॥

अपाङ् प्राङेति स्वधया गृभीतोमर्त्यो मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्य१न्यं चिक्युर्न नि चिक्युरन्यम् ॥ १६ ॥

अपाङ् । प्राङ् । एति । स्वधया । गृभीतः । अमर्त्यः । मर्त्येन । सऽयोनिः ।
ता । शश्वन्ता । विषूचीना । विऽयन्ता । नि । अन्यम् । चिक्युः । न । नि । चिक्युः ।
अन्यम् ॥ १६ ॥

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥ १७ ॥

सप्त । अर्धऽगर्भाः । भुवनस्य । रेतः । विष्णोः । तिष्ठन्ति । प्रऽदिशा । विऽधर्मणि ।
ते । धीतिऽभिः । मनसा । ते । विपःऽचितः । परिऽभुवः । परि । भवन्ति । विश्वतः ॥ १७ ॥

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत् तद् विदुस्ते अमी समासते ॥ १८ ॥

ऋचः । अक्षरे । परमे । विऽओमन् । यस्मिन् । देवाः । अधि । विश्वे । निऽसेदुः ।

---

१ B B[h] ऋतस्या॰. २ P P[2] Cp मा ।. We with J. ३ S[m] ॰तो अमर्त्यो. ४ B B[h] D S[m] Cs न्यइन्यं. We with K K[m] V Dc. ५ P चिक्युः ।. ६ K ॰ष्णोस्तिष्ठन्ति. ७ P प्रऽदिशा ।. We with P[2] J Cp

यः । तत् । न । वेद॑ । किम् । ऋचा । करिष्यति । ये । इत् । तत् । विदुः । ते । अमी इति॑ । सम् । आसते ॥ १८ ॥

ऋचः पदं मात्र॑या क॒ल्पय॑न्तोऽर्धर्चेन॑ चाक्लृपु॒र्विश्व॒मेज॑त् ।
त्रि॒पाद् ब्रह्म॑ पुरु॒रूपं॒ वि त॑ष्ठे[1] तेन॑ जीवन्ति प्र॒दिश॒श्चत॑स्रः ॥ १९ ॥

ऋचः । प॒दम् । मात्र॑या । क॒ल्पय॑न्तः । अ॒र्ध॒ऽऋ॒चेन॑ । च॒क्लृ॒पुः॒ । विश्व॑म् । एज॑त् ।
त्रि॒ऽपात् । ब्रह्म॑ । पु॒रु॒ऽरूप॑म् । वि । त॒स्थे॒ । तेन॑ । जी॒व॒न्ति॒ । प्र॒ऽदिश॑ः । चत॑स्रः ॥ १९ ॥

सू॒य॒व॒साद् भग॑वती॒ हि भू॒या अधा॑ व॒यं भग॑वन्तः स्याम ।
अ॒द्धि तृण॑मघ्न्ये विश्व॒दानीं॒ पिब॑ शु॒द्धमु॑द॒कमा॒चर॑न्ती ॥ २० ॥ (२७)

सु॒य॒व॒स॒ऽअत् । भग॑ऽवती । हि । भू॒याः । अध॑ । व॒यम् । भग॑ऽवन्तः । स्या॒म॒ ।
अ॒द्धि । तृण॑म् । अ॒घ्न्ये॒ । वि॒श्व॒ऽदानी॑म् । पिब॑ । शु॒द्धम् । उ॒द॒कम् । आ॒ऽचर॑न्ती ॥ २० ॥ (२७)

गौ॒रिन्मि॑माय सलि॒लानि॒ त॒क्षत्येक॑पदी द्वि॒पदी॒ सा चतु॑ष्पदी ।
अ॒ष्टाप॑दी॒ नव॑पदी बभू॒वुषी॑ स॒हस्रा॑क्षरा॒ भुव॑नस्य प॒ङ्क्तिस्तस्याः॑ समु॒द्रा अधि॒ वि क्ष॑रन्ति ॥ २१ ॥

गौः । इत् । मि॒मा॒य॒ । स॒लि॒लानि॑ । त॒क्षती॑ । एक॑ऽपदी । द्वि॒ऽपदी॑ । सा । चतु॑ःऽपदी ।
अ॒ष्टाऽप॑दी । नव॑ऽपदी । ब॒भू॒वुषी॑ । स॒हस्र॑ऽअक्षरा । भुव॑नस्य । प॒ङ्क्तिः । तस्याः॑ । स॒मु॒द्राः । अधि॑ । वि । क्ष॒र॒न्ति॒ ॥ २१ ॥

कृ॒ष्णं नि॒यानं॒ हर॑यः सुप॒र्णा अ॒पो वसा॑ना॒ दिव॒मुत्प॑तन्ति ।
त आव॑वृत्र॒न्त्सद॑नादृ॒तस्यादिद्घृ॒तेन॑ पृथि॒वीं व्यू॑दुः ॥ २२ ॥

कृ॒ष्णम् । नि॒ऽयान॑म् । हर॑यः । सु॒ऽप॒र्णाः । अ॒पः । वसा॑नाः । दिव॑म् । उत् । प॒त॒न्ति॒ ।
ते । आ । अ॒व॒वृ॒त्र॒न् । सद॑नात् । ऋ॒तस्य॑ । आत् । इत् । घृ॒तेन॑ । पृ॒थि॒वीम् । वि । ऊ॒दुः॒ ॥ २२ ॥

अ॒पादे॑ति प्रथ॒मा प॒द्वती॑नां॒ कस्तद् वां॑ मित्रावरु॒णा चि॑केत ।
गर्भो॑ भा॒रं भ॑र॒त्या चि॑दस्या ऋ॒तं पिप॒र्त्यनृ॑तं॒ नि पा॑ति ॥ २३ ॥

अ॒पात् । ए॒ति॒ । प्र॒थ॒मा । प॒त्ऽवती॑नाम् । कः । तत् । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । आ । चि॒के॒त॒ ।
गर्भ॑ः । भा॒रम् । भ॒र॒ति॒ । आ । चि॒त् । अ॒स्याः॒ । ऋ॒तम् । पिप॑र्ति । अनृ॑तम् । नि । पा॒ति॒ ॥२३॥

वि॒राड् वाग् वि॒राट् पृ॑थि॒वी वि॒राड॒न्तरि॑क्षं वि॒राट् प्र॒जाप॑तिः ।

---

१ B चष्टे. B[h] D K K[m] S[m] Cs तष्टे. We with A R V Dc.

**विराण्मृत्युः साध्यानामधिराजो बभूव तस्य भूतं भव्यं वशे स मे भूतं भव्यं वशे कृणोतु ॥ २४ ॥**

विऽराट् । वाक् । विऽराट् । पृथिवी । विऽराट् । अन्तरिक्षम् । विऽराट् । प्रजाऽपतिः । विऽराट् । मृत्युः । साध्यानाम् । अधिऽराजः । बभूव । तस्य । भूतम् । भव्यम् । वशे । सः । मे । भूतम् । भव्यम् । वशे । कृणोतु ॥ २४ ॥

**शकमयं धूममारादपश्यं विषूवता पर एनावरेण ।**
**उक्षाणं पृश्निमपचन्त वीरास्तानि धर्माणि प्रथमान्यासन् ॥ २५ ॥**

शकऽमयम् । धूमम् । आरात् । अपश्यम् । विषुऽवता । परः । एना । अवरेण । उक्षाणम् । पृश्निम् । अपचन्त । वीराः । तानि । धर्माणि । प्रथमानि । आसन् ॥ २५ ॥

**त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् ।**
**विश्वमन्यो अभिचष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥ २६ ॥**

त्रयः । केशिनः । ऋतुऽथा । वि । चक्षते । सम्ऽवत्सरे । वपते । एकः । एषाम् । विश्वम् । अन्यः । अभिऽचष्टे । शचीभिः । ध्राजिः । एकस्य । ददृशे । न । रूपम् ॥ २६ ॥

**चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा[1] ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥ २७ ॥**

चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः[2] । ब्राह्मणाः । ये । मनीषिणः । गुहा । त्रीणि । निऽहिता । न । ईङ्गयन्ति । तुरीयम् । वाचः । मनुष्याः । वदन्ति ॥ २७ ॥

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।**
**एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥ २८ ॥** (२८)

इन्द्रम् । मित्रम् । वरुणम् । अग्निम् । आहुः । अथो इति । दिव्यः । सः । सुऽपर्णः । गरुत्मान् ।
एकम् । सत् । विप्राः । बहुऽधा । वदन्ति । अग्निम् । यमम् । मातरिश्वानम् । आहुः ॥ २८ ॥ (२८)

पञ्चमेनुवाके द्वितीयं सूक्तम् ॥

पञ्चमोनुवाकः ॥

**इति नवमं काण्डं समाप्तम् ॥**

---

१ R विदुर्ब्रह्मणा. २ P विदुः ।.

“यां कल्पयन्ति” इत्यर्थसूक्तस्य कृत्याप्रतिहरणगणे पाठात् कृत्यानिर्हरणार्थे शान्त्युदके एतत् सूक्तं विनियुज्यते । तदुक्तं कौशिकेन । “या कल्पयन्तीति महाशान्तिम् आवपते” इति [कौ० ५ ३] ॥ कृत्याप्रतिहरणगणः “दूष्या दूषिरसि” इति सूक्ते [२. ११] द्रष्टव्यः । विनियोगान्तरं च तत्रैव द्रष्टव्यम् ॥

**यां कल्पयन्ति वहतौ वधूमिव विश्वरूपां हस्तकृतां चिकित्सवः ।**
**सारादेत्वप नुदाम एनाम् ॥ १ ॥**

याम् । कल्पयन्ति । वहतौ । वधूम्ऽइव । विश्वऽरूपाम् । हस्तऽकृताम् । चिकित्सवः ।
सा । आरात् । एतु । अप । नुदामः । एनाम् ॥ १ ॥

**शीर्षण्वती नस्वती कर्णिनी कृत्याकृता संभृता विश्वरूपा ।**
**सारादेत्वप नुदाम एनाम् ॥ २ ॥**

शीर्षण्ऽवती । नस्वती । कर्णिनी । कृत्याऽकृता । सम्ऽभृता । विश्वऽरूपा ॥
सा । आरात् । एतु । अप । नुदामः । एनाम् ॥ २ ॥

**शूद्रकृता राजकृता स्त्रीकृता ब्रह्मभिः कृता ।**
**जाया पत्या नुत्तेव कर्तारं बन्ध्वृच्छतु[1] ॥ ३ ॥**

शूद्रऽकृता । राजऽकृता । स्त्रीऽकृता । ब्रह्मऽभिः । कृता ।
जाया । पत्या । नुत्ताऽइव । कर्तारम् । बन्धु[1] । ऋच्छतु ॥ ३ ॥

**अनयाहमोषध्या सर्वाः कृत्या अदूदुषम् ।**
**यां क्षेत्रे चक्रुर्यां गोषु यां वा ते पुरुषेषु ॥ ४ ॥**

अनया । अहम् । ओषध्या । सर्वाः । कृत्याः । अदूदुषम् ।
याम् । क्षेत्रे । चक्रुः । याम् । गोषु । याम् । वा । ते । पुरुषेषु ॥ ४ ॥

**अघमस्त्वघकृते शपथः शपथीयते ।**
**प्रत्यक् प्रतिप्रहिण्मो यथा कृत्याकृतं हनत् ॥ ५ ॥**

अघम् । अस्तु । अघऽकृते । शपथः । शपथिऽयते ।

---

१ B[h] K[m] R C- J बध्वृच्छतु (J बधु). We with A D K S[m] V Dc and P P[2] Cp (बन्धु ।).

प्रत्यक् । प्रतिऽप्रहिण्मः । यथा । कृत्याऽकृतम् । हनत् ॥ ५ ॥

प्रतीचीन आङ्गिरसोध्यक्षो नः पुरोहितः ।
प्रतीचीः कृत्या आकृत्यामून् कृत्याकृतो जहि ॥ ६ ॥

प्रतीचीनः । आङ्गिरसः । अधिऽअक्षः । नः । पुरःऽहितः ।
प्रतीचीः । कृत्याः । आऽकृत्य । अमून् । कृत्याऽकृतः । जहि ॥ ६ ॥

यस्त्वोवाच परेहीति प्रतिकूलमुदाय्यम्[1] ।
तं कृत्येभिनिवर्तस्व मास्मानिच्छो अनागसः ॥ ७ ॥

यः । त्वा । उवाच । परा । इहि । इति । प्रतिऽकूलम् । उत्ऽआय्यम् ।
तम् । कृत्ये । अभिऽनिवर्तस्व । मा । अस्मान् । इच्छः । अनागसः ॥ ७ ॥

यस्ते परूंषि संदधौ रथस्येव[2]र्भुर्धिया ।
तं गच्छ तत्र तेयनमज्ञातस्तेयं जनः ॥ ८ ॥

यः । ते । परूंषि । सम्ऽदधौ । रथस्यऽइव । ऋभुः । धिया ।
तम् । गच्छ । तत्र । ते । अयनम् । अज्ञातः । ते । अयम् । जनः ॥ ८ ॥

ये त्वा कृत्वालेभिरे विद्वला अभिचारिणः ।
शंभ्वी३दं कृत्यादूषणं प्रतिवर्त्म पुनःसरं तेन त्वा स्नपयामसि ॥ ९ ॥

ये । त्वा । कृत्वा । आऽलेभिरे । विद्वलाः । अभिऽचारिणः ।
शम्ऽभु । इदम् । कृत्याऽदूषणम् । प्रतिऽवर्त्म । पुनःऽसरम् । तेन । त्वा । स्नपयामसि ॥ ९ ॥

यद् दुर्भगां प्रस्नपितां मृतवत्सामुपेयिम ।
अपैतु सर्वं मत् पापं द्रविणं मोप तिष्ठतु ॥ १० ॥ (१)

यत् । दुःऽभगाम् । प्रऽस्नपिताम् । मृतऽवत्साम् । उपऽएयिम[3] ।
अप । एतु । सर्वम् । मत् । पापम् । द्रविणम् । मा । उप । तिष्ठतु ॥ १० ॥ (१)

यत् ते पितृभ्यो ददतो यज्ञे वा नाम जगृहुः ।

---

१ All our authorities have °मुदाय्यम् clearly. Rw read °मुदाप्यम् but apparently without any other passage to support the reading, which is probably an emendation. २ So we with all our authorities except Dc which has °व ऋभु°. ३ So P P[2] J Cp.

संदेश्या॒३त् सर्वस्मात् पापादिमा मुञ्चन्तु त्वौषधीः ॥ ११ ॥

यत् । ते । पितृऽभ्यः । ददतः । यज्ञे । वा । नाम । जगृहुः ।

सम्ऽदेश्यात् । सर्वस्मात् । पापात् । इमाः । मुञ्चन्तु । त्वा । ओषधीः ॥ ११ ॥

देवैनसात् पित्र्यान्नामग्राहात् संदेश्यादभिनिष्कृतात् ।

मुञ्चन्तु त्वा वीरुधो वीर्येण ब्रह्मण ऋग्भिः पयस ऋषीणाम् ॥ १२ ॥

देवऽएनसात् । पित्र्यात् । नामऽग्राहात् । सम्ऽदेश्यात् । अभिऽनिष्कृतात् ।

मुञ्चन्तु । त्वा । वीरुधः । वीर्येण । ब्रह्मणा । ऋक्ऽभिः । पयसा । ऋषीणाम् ॥ १२ ॥

यथा वातश्च्यावयति भूम्या रेणुमन्तरिक्षाच्चाभ्रम् ।

एवा मत् सर्वं दुर्भूतं ब्रह्मनुत्तमपायति ॥ १३ ॥

यथा । वातः । च्यवयति । भूम्याः । रेणुम् । अन्तरिक्षात् । च । अभ्रम् ।

एव । मत् । सर्वम् । दुःऽभूतम् । ब्रह्मऽनुत्तम् । अप । अयति ॥ १३ ॥

अप क्राम नानदती विनद्धा गर्दभीव ।

कर्तॄन् नक्षस्वेतो नुत्ता ब्रह्मणा वीर्यावता ॥ १४ ॥

अप । क्राम । नानदती । विऽनद्धा । गर्दभीऽइव ।

कर्तॄन् । नक्षस्व । इतः । नुत्ता । ब्रह्मणा । वीर्यऽवता ॥ १४ ॥

अयं पन्थाः कृत्येति त्वा नयामोभिप्रहितां प्रति त्वा प्र हिण्मः ।

तेनाभि याहि भञ्जत्यनस्वतीव वाहिनी विश्वरूपा कुरूटिनी ॥ १५ ॥

अयम् । पन्थाः । कृत्ये । इति । त्वा । नयामः । अभिऽप्रहिताम् । प्रति । त्वा । प्र । हिण्मः ।

तेन । अभि । याहि । भञ्जती । अनस्वतीऽइव । वाहिनी । विश्वऽरूपा । कुरूटिनी ॥ १५ ॥

पराक् ते ज्योतिरपथं ते अर्वागन्यत्रास्मदयना कृणुष्व ।

---

१ B B^h K S^m Cs त्वोषधीः. We with A D K^m R V Dc. २ A K K^m R and P J Cp पित्र्या॰. S पित्र्या॰. We with B^h D V Dc Cs P^2. ३ B K ॰ग्रहात्सं॰. ४ A B^h R S^m पयस. P J पयसा ।. P^2 Cp पयसा ।. We with D K K^m V and P^2 Cp. ५ A S^m मत्सर्वं. ६ A D R S^m Cs कर्त्रैन्नं॰. P P^2 J कर्त्रैन् । न॰. We with B^h K^m V Dc Cp. ७ P वीर्यऽवं॰ ।. We with P^0 J Cp. ८ So we with all our authorities. P P^2 J Cp have कृत्ये । इति ।. ९ K^m भञ्जंत्य॰. १० K कुरीटिनी.

परेणेहि नवतिं नाव्या३ अति दुर्गाः स्रोत्या मा क्षणिष्ठाः परेहि ॥१६॥

पराक् । ते । ज्योतिः । अपथम् । ते । अर्वाक् । अन्यत्र । अस्मत् । अयना । कृणुष्व ।
परेण । इहि । नवतिम् । नाव्याः । अति । दुःऽगाः । स्रोत्याः । मा । क्षणिष्ठाः । परा ।
इहि ॥ १६ ॥

वात इव वृक्षान् नि मृणीहि पादय मा गामश्वं पुरुषमुच्छिष एषाम् ।
कर्तॄन् निवृत्येतः कृत्येऽप्रजास्त्वाय बोधय ॥ १७ ॥

वातःऽइव । वृक्षान् । नि । मृणीहि । पादय । मा । गाम् । अश्वम् । पुरुषम् । उत् ।
शिषः । एषाम् ।
कर्तॄन् । निऽवृत्य । इतः । कृत्ये । अप्रजाःऽत्वाय । बोधय ॥ १७ ॥

यां ते बर्हिषि यां श्मशाने क्षेत्रे कृत्यां वलगं वा निचख्नुः ।
अग्नौ वा त्वा गार्हपत्येऽभिचेरुः पाकं सन्तं धीरतरा अनागसम् ॥ १८ ॥

याम् । ते । बर्हिषि । याम् । श्मशाने । क्षेत्रे । कृत्याम् । वलगम् । वा । निऽचख्नुः ।
अग्नौ । वा । त्वा । गार्हऽपत्ये । अभिऽचेरुः । पाकम् । सन्तम् । धीरऽतराः । अनाग-
सम् ॥ १८ ॥

उपाहृतमनुबुद्धं निखातं वैरं त्सार्यन्वविदाम कर्त्रम् ।
तदेतु यत आभृतं तत्राश्व इव वि वर्ततां हन्तु कृत्याकृतः प्रजाम् ॥ १९ ॥

उपऽआहृतम् । अनुऽबुद्धम् । निऽखातम् । वैरम् । त्सारि । अनु । अविदाम । कर्त्रम् ।
तत् । एतु । यतः । आऽभृतम् । तत्र । अश्वःऽइव । वि । वर्तताम् । हन्तु । कृत्याऽकृतः ।
प्रऽजाम् ॥ १९ ॥

स्वायसा असयः सन्ति नो गृहे विद्मा ते कृत्ये यतिधा परूंषि ।
उत्तिष्ठैव परेहीतोऽज्ञाते किमिहेच्छसि ॥ २० ॥ (२)

सुऽआयसाः । असयः । सन्ति । नः । गृहे । विद्म । ते । कृत्ये । यतिऽधा । परूंषि ।
उत् । तिष्ठ । एव । परा । इहि । इतः । अज्ञाते । किम् । इह । इच्छसि ॥ २० ॥ (२)

---

१ A B B̊ D K K̊ R S̊ V Cs दुर्गा स्रो°. We with Dc and P P̊ J Cp. २ A D R S̊ Cs P P̊ J कर्त्रेन्नि°. We with B̊ K K̊ V Dc Cp. ३ R कर्तुं. ४ B वर्धेतां. K̊ changes °र्धे° to °र्ते°. ५ P changes °म् to °न्. J °न्. We with P̊ Cp.

ग्रीवास्ते कृत्ये पादौ चापि कर्त्स्यामि निर्द्रव ।
इन्द्राग्नी अस्मान् रक्षतां यौ प्रजानां प्रजावती[1] ॥ २१ ॥

ग्रीवाः । ते । कृत्ये । पादौ । च । अपि । कर्त्स्यामि । निः । द्रव ।
इन्द्राग्नी इति । अस्मान् । रक्षताम् । यौ । प्रऽजानाम् । प्रजावती इति प्रजाऽवती ॥ २१ ॥

सोमो राजाधिपा मृडिता च भूतस्य नः पतयो मृडयन्तु ॥ २२ ॥

सोमः । राजा । अधिऽपाः । मृडिता । च । भूतस्य । नः । पतयः । मृडयन्तु ॥ २२ ॥

भवाशर्वावस्यतां पापकृते कृत्याकृते[2] ।
दुष्कृते[3] विद्युतं देवहेतिम् ॥ २३ ॥

भवाशर्वौ । अस्यताम् । पापऽकृते । कृत्याऽकृते ।
दुःऽकृते । विऽद्युतम् । देवऽहेतिम् ॥ २३ ॥

यद्येयथ द्विपदी चतुष्पदी कृत्याकृता संभृता विश्वरूपा ।
सेतोऽ३ष्टापदी[4] भूत्वा पुनः परेहि दुच्छुने ॥ २४ ॥

यदि । आऽइयथ । द्विऽपदी । चतुःऽपदी । कृत्याऽकृता । सम्ऽभृता । विश्वऽरूपा ।
सा । इतः । अष्टाऽपदी । भूत्वा । पुनः । परा । इहि । दुच्छुने ॥ २४ ॥

अभ्य१क्ताक्ता[5] स्वरंकृता सर्वं भरन्ती दुरितं परेहि ।
जानीहि कृत्ये कर्तारं दुहितेव पितरं स्वम् ॥ २५ ॥

अभिऽअक्ता । आऽअक्ता । सुऽअरंकृता । सर्वम् । भरन्ती । दुःऽइतम् । परा । इहि ।
जानीहि । कृत्ये । कर्तारम् । दुहिताऽइव । पितरम् । स्वम् ॥ २५ ॥

परेहि कृत्ये मा तिष्ठो विद्धस्येव पदं नय ।
मृगः स मृगयुस्त्वं न त्वा निकर्तुमर्हति ॥ २६ ॥

परा । इहि । कृत्ये । मा । तिष्ठः । विद्धस्यऽइव । पदम् । नय ।

---

१ All our authorities have प्रजावती. Prof. Whitney amends to प्रजापती, which does not appear necessary, as it is allowable to speak of a god as a mother. २ K^m Dc omit the stop after कृत्याकृते. We with A B^h D K R S^m V Cs P P^2 J Cp. ३ D S^m दुःकृते. Cs दुकृते. We with A K K^m R V Dc ४ A D R S^m Dc Cs have no kampa, reading सेतो ष्टाप॰. B^h K K^m V सेतोऽ३ष्टाप॰. ५ B B^h D K K^m S^m V Dc Cs अभ्यऽक्ता॰.

मृगः । सः । मृगऽयुः । त्वम् । न । त्वा । निऽकर्तुम् । अर्हति ॥ २६ ॥

उत हन्ति पूर्वासिनं प्रत्यादायापर इष्वा ।
उत पूर्वस्य निघ्नतो नि हन्त्यपरः प्रति ॥ २७ ॥

उत । हन्ति । पूर्वऽआसिनम् । प्रतिऽआदाय । अपरः । इष्वा ।
उत । पूर्वस्य । निऽघ्नतः । नि । हन्ति । अपरः । प्रति ॥ २७ ॥

एतद्धि शृणु मे वचोथेहि यत एयथ ।
यस्त्वा चकार तं प्रति ॥ २८ ॥

एतत् । हि । शृणु । मे । वचः । अथ । इहि । यतः । आऽइयथ ।
यः । त्वा । चकार । तम् । प्रति ॥ २८ ॥

अनागोहत्या वै भीमा कृत्ये मा नो गामश्वं पुरुषं वधीः ।
यत्रयत्रासि निहिता ततस्त्वोत्थापयामसि पर्णाल्लघीयसी भव ॥ २९ ॥

अनागःऽहत्या । वै । भीमा । कृत्ये । मा । नः । गाम् । अश्वम् । पुरुषम् । वधीः ।
यत्रऽयत्र । असि । निऽहिता । ततः । त्वा । उत् । स्थापयामसि । पर्णात् । लघीयसी ।
भव ॥ २९ ॥

यदि स्थ तमसावृता जालेनाभिहिता इव ।
सर्वाः संलुप्येतः कृत्याः पुनः कर्त्रे प्र हिण्मसि ॥ ३० ॥

यदि । स्थ । तमसा । आऽवृता । जालेन । अभिहिताःऽइव ।
सर्वाः । सम्ऽलुप्य । इतः । कृत्याः । पुनः । कर्त्रे । प्र । हिण्मसि ॥ ३० ॥

कृत्याकृतो वलगिनोभिनिष्कारिणः प्रजाम् ।
मृणीहि कृत्ये मोच्छिषोमून् कृत्याकृतो जहि ॥ ३१ ॥

कृत्याऽकृतः । वलगिनः । अभिऽनिष्कारिणः । प्रऽजाम् ।
मृणीहि । कृत्ये । मा । उत् । शिषः । अमून् । कृत्याऽकृतः । जहि ॥ ३१ ॥

यथा सूर्यो मुच्यते तमसस्परि रात्रिं जहात्युषसश्च केतून् ।
एवाहं सर्वं दुर्भूतं कर्त्रं कृत्याकृता कृतं हस्तीव रजो दुरितं जहामि॥३२॥ (३)

यथा । सूर्यः । मुच्यते । तमसः । परि । रात्रिम् । जहाति । उषसः । च । केतून् ।

एव । अहम् । सर्वम् । दुःऽभूतम् । कर्त्रम् । कृत्याऽकृता । कृतम् । हस्तीऽइव । रजः ।
दुःऽइतम् । जहामि ॥ ३२ ॥ (३)

इति प्रथमेनुवाके प्रथमं सूक्तम् ॥

अस्मिन् सूक्ते पुरुषस्य अर्थात् मनुष्यस्य माहात्म्यं वर्ण्यते । तच्च तद्भिन्नभिन्नावयवान् को देवोकरोद् इत्यादिप्रश्नरूपेण न-त्तत्प्रश्नानाम् उत्तररूपेण च ॥

यज्ञलम्पटाः साम्प्रदायिकास्तु एतत् सूक्त पुरुषमेधे विनियोजयन्ति । तद् यथा । पुरुषमेधे स्नातालङ्कृतम् उत्सृज्यमान पुरुषपशु "केन पार्ष्णी" इत्यर्थसूक्तेन अनुमन्त्रयते । तद् उक्त वैताने । "तं ह स्नातम् अलङ्कृतम् उत्सृज्यमान सहस्रबाहु पुरुषः [१९. ६] केन पार्ष्णी [१०. २] इत्यनुमन्त्रयते" इति [वै॰ ७. २] ॥

तथा अस्य सूक्तस्य शनैश्चरग्रहदेवत्यहविराज्यहोमे समिदाधानोपस्थानयोश्च विनियोगः । "अथाज्यभागान्ते विषासहिम् [१७ १] इत्यादित्याय हविषो हुत्वाज्यं जुहुयात् समिध आधायोपतिष्ठते" इति प्रक्रम्य शान्तिकल्पे सूत्रितम् । "सहस्रबाहु पुरुषः [१९. ६] केन पार्ष्णी [१०. २] प्राणाय नम [११ ६] इति शनैश्चराय" इति [शा॰क॰ १५] ॥

**केन पार्ष्णी आभृते पूरुषस्य केन मांसं संभृतं केन गुल्फौ ।**
**केनाङ्गुलीः पेशनीः केन खानि केनोच्छ्लङ्खौ[1] मध्यतः कः प्रतिष्ठाम् ॥१॥**

केन । पार्ष्णी इति । आभृते इत्याऽभृते । पुरुषस्य । केन । मांसम् । सम्ऽभृतम् । केन । गुल्फौ ।
केन । अङ्गुलीः । पेशनीः । केन । खानि । केन । उत्ऽश्लङ्खौ । मध्यतः । कः । प्रतिऽस्थाम् ॥ १ ॥

**कस्मान्नु गुल्फावधरावकृण्वन्नष्ठीवन्तावुत्तरौ पूरुषस्य ।**
**जङ्घे निर्ऋत्य[2] न्यदधुः क्व स्विज्जानुनोः संधी क उ तच्चिकेत ॥ २ ॥**

कस्मात् । नु । गुल्फौ । अधरौ । अकृण्वन् । अष्ठीवन्तौ । उत्ऽतरौ । पुरुषस्य ।
जङ्घे इति । निःऽऋत्य । नि । अदधुः । क्व । स्वित् । जानुनोः । संधी इति सम्ऽधी ।
कः । ऊं इति । तत् । चिकेत ॥ २ ॥

**चतुष्टयं युज्यते संहितान्तं जानुभ्यामूर्ध्वं शिथिरं कबन्धम् ।**
**श्रोणी यदूरू क उ तज्जजान याभ्यां कुसिन्धं सुदृढं बभूव ॥ ३ ॥**

चतुष्टयम् । युज्यते । संहितऽअन्तम् । जानुऽभ्याम् । ऊर्ध्वम् । शिथिरम् । कबन्धम् ।
श्रोणी इति । यत् । ऊरू इति । कः । ऊं इति । तत् । जजान । याभ्याम् । कुसिन्धम्[3] ।
सुऽदृढम् । बभूव ॥ ३ ॥

**कति देवाः कतमे त आसन् य उरो ग्रीवाश्चिक्युः पूरुषस्य ।**

---

१ So we with all our authorities, except K who has °च्छुङ्खौ. २ A B $\overset{h}{B}$ D K $\overset{m}{K}$ $\overset{m}{S}$ D$_c$ C$_s$ निर्ऋत्यं. We with R P $\overset{2}{P}$ J C$_P$. ३ P कुसिंधम्. We with $\overset{2}{P}$ J C$_P$.

कति स्तनौ व्यदधुः कः कफोडौ कति स्कन्धान् कति पृष्टीरचिन्वन् ॥ ४ ॥

कति । देवाः । कतमे । ते । आसन् । ये । उरः । ग्रीवाः । चिक्युः । पुरुषस्य ।

कति । स्तनौ । वि । अदधुः । कः । कफोडौ । कति । स्कन्धान् । कति । पृष्टीः । अचिन्वन् ॥ ४ ॥

को अस्य बाहू समभरद् वीर्यं करवादिति ।
अंसौ को अस्य तद् देवः कुसिन्धे अध्या दधौ ॥ ५ ॥

कः । अस्य । बाहू इति । सम् । अभरत् । वीर्यम् । करवात् । इति ।
अंसौ । कः । अस्य । तत् । देवः । कुसिन्धे । अधि । आ । दधौ ॥ ५ ॥

कः सप्त खानि वि ततर्द शीर्षणि कर्णाविमौ नासिके चक्षणी मुखम् ।
येषां पुरुत्रा विजयस्य मह्मनि चतुष्पादो द्विपदो यन्ति यामम् ॥ ६ ॥

कः । सप्त । खानि । वि । ततर्द । शीर्षणि । कर्णौ । इमौ । नासिके इति । चक्षणी इति । मुखम् ।

येषाम् । पुरुऽत्रा । विऽजयस्य । मह्मनि । चतुःऽपादः । द्विऽपदः । यन्ति । यामम् ॥ ६ ॥

हन्वोर्हि जिह्वामदधात् पुरूचीमधा महीमधि शिश्राय वाचम् ।
स आ वरीवर्ति भुवनेष्वन्तरपो वसानः क उ तच्चिकेत ॥ ७ ॥

हन्वोः । हि । जिह्वाम् । अदधात् । पुरूचीम् । अध । महीम् । अधि । शिश्राय । वाचम् ।
सः । आ । वरीवर्ति । भुवनेषु । अन्तः । अपः । वसानः । कः । ऊं इति । तत् । चिकेत ॥ ७ ॥

मस्तिष्कमस्य यतमो ललाटं ककाटिकां प्रथमो यः कपालम् ।
चित्वा चित्यं हन्वोः पूरुषस्य दिवं रुरोह कतमः स देवः ॥ ८ ॥

मस्तिष्कम् । अस्य । यतमः । ललाटम् । ककाटिकाम् । प्रथमः । यः । कपालम् ।
चित्वा । चित्यम् । हन्वोः । पुरुषस्य । दिवम् । रुरोह । कतमः । सः । देवः ॥ ८ ॥

प्रियाप्रियाणि बहुला स्वप्नं संबाधतन्द्र्यः ।

---

१ So we with all our authorities. See Rw. २ D K K[m] V Dc Cs P J Cp पृष्टीर°. We with A B[h] R S[m] P[2]. ३ P ते ।. ४ P चिक्युः ।. ५ K V °भव°. ६ K K[m] शीर्षाणि. ७ A°R कृकाटिकां. We with B[h] D K K[m] S[m] V Dc Cs and P P[2] J Cp. ८ B[h] Cs पुरुषस्य. ९ P[2] चित्यम् ।.

आनन्दानुग्रो नन्दांश्च कस्माद् वहति पूरुषः ॥ ९ ॥

प्रियऽअप्रियाणि । बहुला । स्वप्नम् । संबाधऽतन्द्यः । 

आऽनन्दान् । उग्रः । नन्दान् । च । कस्मात् । वहति । पुरुषः ॥ ९ ॥

आर्तिरवर्तिर्निर्ऋतिः कुतो नु पुरुषेमतिः ।

राद्धिः समृद्धिरव्यृद्धिर्मतिरुदितयः कुतः ॥ १० ॥ (४)

आर्तिः । अवर्तिः । निःऽऋतिः । कुतः । नु । पुरुषे । अमतिः ।

राद्धिः । सम्ऽऋद्धिः । अविऽऋद्धिः । मतिः । उत्ऽइतयः । कुतः ॥ १० ॥ (४)

को अस्मिन्नापो व्यदधाद् विषूवृतः पुरूवृतः सिन्धुसृत्याय जाताः ।

तीव्रा अरुणा लोहिनीस्ताम्रधूम्रा ऊर्ध्वा अवाचीः पुरुषे तिरश्चीः ॥११॥

कः । अस्मिन् । आपः । वि । अदधात् । विषुऽवृतः । पुरुऽवृतः । सिन्धुऽसृत्याय । जाताः ।

तीव्राः । अरुणाः । लोहिनीः । ताम्रऽधूम्राः । ऊर्ध्वाः । अवाचीः । पुरुषे । तिरश्चीः ॥ ११ ॥

को अस्मिन् रूपमदधात् को मह्मानं च नाम च ।

गातुं को अस्मिन् कः केतुं कश्चरित्राणि पूरुषे ॥ १२ ॥

०अस्मिन् । रूपम् । अदधात् । कः । मह्मानम् । च । नाम । च ।

गातुम् । कः । अस्मिन् । कः । केतुम् । कः । चरित्राणि । पुरुषे ॥ १२ ॥

को अस्मिन् प्राणमवयत् को अपानं व्यानमु ।

समानमस्मिन् को देवोधि शिश्राय पूरुषे ॥ १३ ॥

०अस्मिन् । प्राणम् । अवयत् । कः । अपानम् । विऽआनम् । ऊं इति ।

सम्ऽआनम् । अस्मिन् । कः । देवः । अधि । शिश्राय । पुरुषे ॥ १३ ॥

को अस्मिन् यज्ञमदधादेको देवोधि पूरुषे ।

को अस्मिन्त्सत्यं कोनृतं कुतो मृत्युः कुतोमृतम् ॥ १४ ॥

कः । अस्मिन् । यज्ञम् । अदधात् । एकः । देवः । अधि । पुरुषे ।

कः । अस्मिन् । सत्यम् । कः । अनृतम् । कुतः । मृत्युः । कुतः । अमृतम् ॥ १४ ॥

---

१ A पुरुषेमतिः. २ K प्रवृद्धि°. ३ B[h] K[m] R V पुरुवृतः. We with A D K S[m] Dc Cs.
४ K[m] °भृत्याय.

को अस्मै वासः पर्यदधात् को अस्यायुरकल्पयत् ।
बलं को अस्मै प्रायच्छत् को अस्याकल्पयज्जवम् ॥ १५ ॥

कः । अस्मै । वासः । परि । अदधात् । कः । अस्य । आयुः । अकल्पयत् ।
बलम् । कः । अस्मै । प्र । अयच्छत् । कः । अस्य । अकल्पयत् । जवम् ॥ १५ ॥

केनापो अन्वतनुत केनाहरकरोद् रुचे ।
उषसं केनान्वैन्द्ध केन सायंभवं ददे ॥ १६ ॥

केन । आपः । अनु । अतनुत । केन । अहः । अकरोत् । रुचे ।
उषसम् । केन । अनु । ऐन्द्ध । केन । सायम्ऽभवम् । ददे ॥ १६ ॥

को अस्मिन् रेतो न्यदधात् तन्तुरा तायतामिति ।
मेधां को अस्मिन्नध्यौहत् को बाणं को नृतो दधौ ॥ १७ ॥

कः । अस्मिन् । रेतः । नि । अदधात् । तन्तुः । आ । तायताम् । इति ।
मेधाम् । कः । अस्मिन् । अधि । औहत् । कः । बाणम् । कः । नृतः । दधौ ॥ १७ ॥

केनेमां भूमिमौर्णोत् केन पर्यभवद् दिवम् ।
केनाभि मह्ना पर्वतान् केन कर्माणि पूरुषः ॥ १८ ॥

केन । इमाम् । भूमिम् । और्णोत् । केन । परि । अभवत् । दिवम् ।
केन । अभि । मह्ना । पर्वतान् । केन । कर्माणि । पुरुषः ॥ १८ ॥

केन पर्जन्यमन्वेति केन सोमं विचक्षणम् ।
केन यज्ञं च श्रद्धां च केनास्मिन् निहितं मनः ॥ १९ ॥

केन । पर्जन्यम् । अनु । एति । केन । सोमम् । विऽचक्षणम् ।
केन । यज्ञम् । च । श्रद्धाम् । च । केन । अस्मिन् । निऽहितम् । मनः ॥ १९ ॥

केन श्रोत्रियमाप्नोति केनेमं परमेष्ठिनम् ।
केनेममग्निं पूरुषः केन संवत्सरं ममे ॥ २० ॥ (५)

केन । श्रोत्रियम् । आप्नोति । केन । इमम् । परमेऽस्थिनम् ।
केन । इमम् । अग्निम् । पुरुषः । केन । सम्ऽवत्सरम् । ममे ॥ २० ॥ (५)

ब्रह्म श्रोत्रियमाप्नोति ब्रह्मेमं परमेष्ठिनम् ।

ब्रह्मेममग्निं पूरुषो ब्रह्म संवत्सरं ममे ॥ २१ ॥

ब्रह्म । श्रोत्रियम् । आप्नोति । ब्रह्म । इमम् । परमेऽस्थिनम् ।

ब्रह्म । इमम् । अग्निम् । पुरुषः । ब्रह्म । सम्ऽवत्सरम् । ममे ॥ २१ ॥

केन देवाँ[1] अनु क्षियति[2] केन दैवजनीर्विशः ।

केनेदमन्यन्नक्षत्रं केन सत् क्षत्रमुच्यते ॥ २२ ॥

केन । देवान् । अनु । क्षियति । केन । दैवऽजनीः । विशः ।

केन । इदम् । अन्यत् । नक्षत्रम् । केन । सत् । क्षत्रम् । उच्यते ॥ २२ ॥

ब्रह्म देवाँ[3] अनु क्षियति[4] ब्रह्म दैवजनीर्विशः ।

ब्रह्मेदमन्यन्नक्षत्रं ब्रह्म सत् क्षत्रमुच्यते ॥ २३ ॥

ब्रह्म । देवान् । अनु । क्षियति । ब्रह्म । दैवऽजनीः । विशः ।

ब्रह्म । इदम् । अन्यत् । नक्षत्रम् । ब्रह्म । सत् । क्षत्रम् । उच्यते ॥ २३ ॥

केनेयं भूमिर्विहिता केन द्यौरुत्तरा हिता ।

केनेदमूर्ध्वं तिर्यक् चान्तरिक्षं व्यचो हितम् ॥ २४ ॥

केन । इयम् । भूमिः । विऽहिता । केन । द्यौः । उत्ऽतरा । हिता ।

केन । इदम् । ऊर्ध्वम् । तिर्यक् । च । अन्तरिक्षम् । व्यचः । हितम् ॥ २४ ॥

ब्रह्मणा भूमिर्विहिता ब्रह्म द्यौरुत्तरा हिता ।

ब्रह्मेदमूर्ध्वं तिर्यक् चान्तरिक्षं व्यचो हितम् ॥ २५ ॥

ब्रह्मणा । भूमिः । विऽहिता । ब्रह्म । द्यौः । उत्ऽतरा । हिता ।

ब्रह्म । इदम् । ऊर्ध्वम् । तिर्यक् । च । अन्तरिक्षम् । व्यचः । हितम् ॥ २५ ॥

मूर्धानमस्य संसीव्याथर्वा हृदयं च यत् ।

मस्तिष्कादूर्ध्वः प्रैरयत् पवमानोधि शीर्षतः ॥ २६ ॥

मूर्धानम् । अस्य । सम्ऽसीव्य । अथर्वा । हृदयम् । च । यत् ।

मस्तिष्कात् । ऊर्ध्वः । प्र । ऐरयत् । पवमानः । अधि । शीर्षतः ॥ २६ ॥

---

१ A R देवँ. We with B[h] D K K[m] S[m] V Dc C[s]. २ K क्षियन्ति. ३ A R S[m] देवँ. We with B[h] D K K[m] V Dc C[s]. ४ K क्षयति.

तद् वा अथर्वणः शिरो देवकोशः समुब्जितः ।
तत् प्राणो अभि रक्षति शिरो अन्नमथो मनः ॥ २७ ॥

तत् । वै । अथर्वणः । शिरः । देवऽकोशः । सम्ऽउब्जितः[1] ।
तत् । प्राणः । अभि । रक्षति । शिरः । अन्नम् । अथो इति । मनः ॥ २७ ॥

ऊर्ध्वो नु सृष्टा३स्तिर्यङ् नु सृष्टा३ः सर्वा दिशः पुरुष आ बभूवाँ३[2] ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥ २८ ॥

ऊर्ध्वः । नु । सृष्टा३ः । तिर्यङ् । नु । सृष्टा३ः । सर्वाः । दिशः । पुरुषः । आ । बभूवाँ३[3] ।
पुरम् । यः । ब्रह्मणः । वेद । यस्याः । पुरुषः । उच्यते ॥ २८ ॥

यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम् ।
तस्मै ब्रह्म च ब्राह्माश्च चक्षुः प्राणं प्रजां ददुः ॥ २९ ॥

यः । वै । ताम् । ब्रह्मणः । वेद । अमृतेन । आऽवृताम् । पुरम् ।
तस्मै । ब्रह्म । च । ब्राह्माः[4] । च । चक्षुः । प्राणम् । प्रऽजाम् । ददुः ॥ २९ ॥

न वै तं चक्षुर्जहाति न प्राणो जरसः पुरा ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥ ३० ॥

न । वै । तम् । चक्षुः । जहाति । न । प्राणः । जरसः । पुरा ।
पुरम् । यः । ब्रह्मणः । वेद । यस्याः । पुरुषः । उच्यते ॥ ३० ॥

अष्टाचक्रा नवद्वारा देवानां पूरयोध्या ।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः ॥ ३१ ॥

अष्टाऽचक्रा । नवऽद्वारा । देवानाम् । पूः । अयोध्या ।
तस्याम् । हिरण्ययः । कोशः । स्वःऽगः । ज्योतिषा । आऽवृतः ॥ ३१ ॥

तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते ।
तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः ॥ ३२ ॥

तस्मिन् । हिरण्यये । कोशे । त्रिऽअरे । त्रिऽप्रतिस्थिते ।
तस्मिन् । यत् । यक्षम् । आत्मन्ऽवत् । तत् । वै । ब्रह्मऽविदः । विदुः ॥ ३२ ॥

---

१ P °ऊब्जितः ।. २ Such is the accent and reading of all our authorities. ३ So P P̊. J °वाँम् ॥ ४ ।. Cp °वाँ ४ ।. ४ P ब्रह्माः ।. We with P̊ J Cp.

प्रभ्राजमानां हरिणीं यशसा संपरीवृताम् ।
पुरं हिरण्ययीं[1] ब्रह्मा विवेशापराजिताम् ॥ ३३ ॥ (६)

प्रऽभ्राजमानाम् । हरिणीम् । यशसा । सम्ऽपरिवृताम् ।
पुरम् । हिरण्ययीम्[1] । ब्रह्म । आ । विवेश । अपराऽजिताम् ॥ ३३ ॥ (६)

प्रथमेनुवाके द्वितीयं सूक्तम् ॥

इति प्रथमोनुवाकः ॥

अस्मिन् सूक्ते वरणस्य नाम मणेः प्रतापो वीर्यं शत्रुक्षयसामर्थ्यं धारयितृसर्वदुःखपरिहरणं च वर्ण्यते । तदनुसारेणैव सांप्रदायिकास्तद् विनियोजयन्ति । तद् यथा ।

शत्रुक्षयादिकामः "अयं मे वरणः" इत्यर्थसूक्तेन दध्नि मधुनि च त्रिरात्रं वासितं वरणमणिं संपात्य अभिमन्त्र्य बध्नीयात् । सूत्रितं हि । "अयं मे वरणः [१०. ३] अरातीयोः [१०. ६] इति मन्त्रोक्तान् वासितान् बध्नाति" इति [कौ॰ ३. २] ॥

तथा "अभया भयार्तस्य" इति [न॰क॰ १७] विहितायाम् अभयाख्यायां महाशान्तौ वरणमणिबन्धनेपि एतत् सूक्तम् । उक्तं नक्षत्रकल्पे । "अयं मे वरणो मणिरिति वारणम् अभयायाम्" इति [न॰क॰ १९] ॥

अयं मे वरणो मणिः सपत्नक्षयणो वृषा ।
तेना रभस्व त्वं शत्रून् प्र मृणीहि दुरस्यतः ॥ १ ॥

अयम् । मे । वरणः । मणिः । सपत्नऽक्षयणः । वृषा ।
तेन । आ । रभस्व । त्वम् । शत्रून् । प्र । मृणीहि । दुरस्यतः ॥ १ ॥

प्रैणाञ्छृणीहि[2] प्र मृणा रभस्व मणिस्ते[3] अस्तु पुरएता पुरस्तात् ।
अवारयन्त वरणेन देवा अभ्याचारमसुराणां श्वःश्वः[4] ॥ २ ॥

प्र । एनान् । शृणीहि । प्र । मृण । आ । रभस्व । मणिः । ते । अस्तु । पुरःऽएता । पुरस्तात् ।
अवारयन्त । वरणेन । देवाः । अभिऽआचारम् । असुराणाम् । श्वःऽश्वः[4] ॥ २ ॥

अयं मणिर्वरणो विश्वभेषजः सहस्राक्षो हरितो हिरण्ययः ।
स ते शत्रूनधरान् पादयाति पूर्वस्तान् दभ्नुहि ये त्वा द्विषन्ति ॥ ३ ॥

अयम् । मणिः । वरणः । विश्वऽभेषजः । सहस्रऽअक्षः । हरितः । हिरण्ययः ।
सः । ते । शत्रून् । अधरान् । पादयाति । पूर्वः । तान् । दभ्नुहि । ये । त्वा । द्विषन्ति ॥ ३ ॥

---

१ K हिरण्मयी. K^m हिरण्मयीं changed from हिरण्ययीं. We with A B^h D R S^m V Dc Cs P P^2 J Cp. २ A K^m R Dc प्रैणांछृ॰. D Cs प्रैणान्छृ॰. We with B^h K S^m V. ३ R S^m मणिष्टे corrected from मणिस्ते. We with A B^h D K K^m V Dc Cs ४ A B B^h D K K^m R S^m V Cs श्वश्वः. We with Dc and P P^2 J Cp.

अयं ते कृत्यां वितंतां पौरुषेयादयं भयात् ।
अयं त्वा सर्वस्मात् पापाद् वरणो वारयिष्यते ॥ ४ ॥

अयम् । ते । कृत्याम् । विऽतंताम् । पौरुषेयात् । अयम् । भयात् ।
अयम् । त्वा । सर्वस्मात् । पापात् । वरणः । वारयिष्यते ॥ ४ ॥

वरणो वारयाता अयं देवो वनस्पतिः ।
यक्ष्मो यो अस्मिन्नाविष्टस्तमु देवा अवीवरन् ॥ ५ ॥

वरणः । वारयातै । अयम् । देवः । वनस्पतिः ।
यक्ष्मः । यः । अस्मिन् । आऽविष्टः । तम् । ऊं इति । देवाः । अवीवरन् ॥ ५ ॥

स्वप्नं सुप्त्वा यदि पश्यासि पापं मृगः सृतिं यति धावादजुष्टाम् ।
परिक्षवाच्छकुनेः पापवादादयं मणिर्वरणो वारयिष्यते ॥ ६ ॥

स्वप्नम् । सुप्त्वा । यदि । पश्यासि । पापम् । मृगः । सृतिम् । यति । धावात् । अजुष्टाम् ।
परिऽक्षवात् । शकुनेः । पापऽवादात् । अयम् । मणिः । वरणः । वारयिष्यते ॥ ६ ॥

अरात्यास्त्वा निर्ऋत्या अभिचारादथो भयात् ।
मृत्योरोजीयसो वधाद् वरणो वारयिष्यते ॥ ७ ॥

अरात्याः । त्वा । निःऽऋत्याः । अभिऽचारात् । अथो इति । भयात् ।
मृत्योः । ओजीयसः । वधात् । वरणः । वारयिष्यते ॥ ७ ॥

यन्मे माता यन्मे पिता भ्रातरो यच्च मे स्वा यदेनश्चकृमा वयम् ।
ततो नो वारयिष्यतेयं देवो वनस्पतिः ॥ ८ ॥

यत् । मे । माता । यत् । मे । पिता । भ्रातरः । यत् । च । मे । स्वाः । यत् । एनः ।
चकृम । वयम् ।
ततः । नः । वारयिष्यते । अयम् । देवः । वनस्पतिः ॥ ८ ॥

वरणेन प्रव्यथिता भ्रातृव्या मे सबन्धवः[1] ।
असूर्तं रजो अप्यगुस्ते यन्त्वधमं तमः ॥ ९ ॥

वरणेन । प्रऽव्यथिताः । भ्रातृव्याः । मे । सऽबन्धवः ।
असूर्तम् । रजः । अपि । अगुः । ते । यन्तु । अधमम् । तमः ॥ ९ ॥

---

१ S^m सबन्धवाः.

अरिष्टोहमरिष्टगुरायुष्मान्त्सर्वपूरुषः।
तं मायं वरणो मणिः परि पातु दिशोदिशः॥ १०॥ (८)

अरिष्टः। अहम्। अरिष्टऽगुः। आयुष्मान्। सर्वऽपुरुषः।
तम्। मा। अयम्। वरणः[1]। मणिः। परि। पातु। दिशःऽदिशः॥ १०॥ (८)

अयं मे वरण उरसि राजा देवो वनस्पतिः।
स मे शत्रून् वि बाधतामिन्द्रो दस्यूनिवासुरान्॥ ११॥

अयम्। मे। वरणः। उरसि। राजा। देवः। वनस्पतिः।
सः। मे। शत्रून्। वि। बाधताम्। इन्द्रः। दस्यून्ऽइव। असुरान्॥ ११॥

इमं बिभर्मि वरणमायुष्मान्छतशारदः[2]।
स मे राष्ट्रं च क्षत्रं च पशूनोजश्च मे दधत्॥ १२॥

इमम्। बिभर्मि। वरणम्। आयुष्मान्। शतऽशारदः।
सः। मे। राष्ट्रम्। च। क्षत्रम्। च। पशून्। ओजः। च। मे। दधत्॥ १२॥

यथा वातो वनस्पतीन् वृक्षान् भनक्त्योजसा।
एवा सपत्नान् मे भङ्ग्धि पूर्वान्[3] जातौँ[4] उतापरान् वरणस्त्वाभि र-
क्षतु॥ १३॥

यथा। वातः। वनस्पतीन्। वृक्षान्। भनक्ति। ओजसा।
एव। सऽपत्नान्। मे। भङ्ग्धि। पूर्वान्। जातान्। उत। अपरान्। वरणः। त्वा। अभि।
रक्षतु॥ १३॥

यथा वातश्चाग्निश्च वृक्षान् प्सातो वनस्पतीन्।
एवा सपत्नान् मे प्साहि पूर्वान्०॥ १४॥

यथा। वातः। च। अग्निः। च। वृक्षान्। प्सातः[5]। वनस्पतीन्।
०। सऽपत्नान्। मे। प्साहि। पूर्वान्।०॥ १४॥

यथा वातेन प्रक्षीणा वृक्षाः शेरे[6] न्यर्पिताः।

---

१ P वरुणः।. २ A K^m R Dc °युष्मांछत°. We with B^h D S^m V Cs. ३ K^m पूर्वां. ४ K जातानु° for जातौँ उ°. ५ P प्शातः।. ६ D श्येरे.

**एवा सपत्नांस्त्वं मम प्र क्षिणीहि न्यर्पय**
**पूर्वान् जातॉं उतापरान् वरणस्त्वाभि रक्षतु ॥ १५ ॥**

यथा । वातेन । प्रऽक्षीणाः । वृक्षाः । शेरे । निऽअर्पिताः ।
एव । सऽपत्नान् । त्वम् । मम । प्र । क्षिणीहि । नि । अर्पय ।
पूर्वान् । जातान् । उत । अपरान् । वरणः । त्वा । अभि । रक्षतु ॥ १५ ॥

**तांस्त्वं प्र च्छिन्द्धि वरण पुरा दिष्टात् पुरायुषः ।**
**य एनं पशुषु दिप्सन्ति ये चास्य राष्ट्रदिप्सवः ॥ १६ ॥**

तान् । त्वम् । प्र । छिन्द्धि । वरण । पुरा । दिष्टात् । पुरा । आयुषः ।
ये । एनम् । पशुषु । दिप्सन्ति । ये । च । अस्य । राष्ट्रऽदिप्सवः ॥ १६ ॥

**यथा सूर्यो अतिभाति यथास्मिन् तेज आहितम् ।**
**एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु**
**तेजसा मा समुक्षतु यशसा समनक्तु मा ॥ १७ ॥**

यथा । सूर्यः । अतिऽभाति । यथा । अस्मिन् । तेजः । आऽहितम् ।
एव । मे । वरणः । मणिः । कीर्तिम् । भूतिम् । नि । यच्छतु ।
तेजसा । मा । सम् । उक्षतु । यशसा । सम् । अनक्तु । मा ॥ १७ ॥

**यथा यशश्चन्द्रमस्यादित्ये च नृचक्षसि । एवा मे० ॥ १८ ॥**

यथा । यशः । चन्द्रमसि । आदित्ये । च । नृऽचक्षसि ॥०॥ १८ ॥

**यथा यशः पृथिव्यां यथास्मिन् जातवेदसि । एवा० ॥ १९ ॥**

०। यशः । पृथिव्याम् । यथा । अस्मिन् । जातऽवेदसि ॥०॥ १९ ॥

**यथा यशः कन्यायां यथास्मिन्त्संभृते रथे । एवा० ॥ २० ॥ (८)**

०। यशः । कन्यायाम् । यथा । अस्मिन् । सम्ऽभृते । रथे ॥०॥ २० ॥ (८)

**यथा यशः सोमपीथे मधुपर्के यथा यशः । एवा० ॥ २१ ॥**

०। यशः । सोमऽपीथे । मधुऽपर्के । यथा । यशः ॥०॥ २१ ॥

**यथा यशोऽग्निहोत्रे वषट्कारे यथा यशः । एवा० ॥ २२ ॥**

---

१ D S[m] Cs सपत्नं°. We with A B[h] K K[m] R V Dc. २ A R जातें. ३ B यथास्मिन्ते°. ४ K[m] यथास्मिं°. ५ So we with all our authorities. Rw read यशो अग्नि°.

०। यशः । अग्निऽहोत्रे । वषट्ऽकारे । यथा । यशः ॥० ॥ २२ ॥

**यथा यशो यजमाने यथास्मिन् यज्ञ आहितम् । एवा० ॥ २३ ॥**

०। यशः । यजमाने । यथा । अस्मिन् । यज्ञे । आऽहितम् ॥० ॥ २३ ॥

**यथा यशः प्रजापतौ यथास्मिन् परमेष्ठिनि । एवा० ॥ २४ ॥**

यथा । यशः । प्रजाऽपतौ । यथा । अस्मिन् । परमेऽस्थिनि ॥० ॥ २४ ॥

**यथा देवेष्वमृतं यथैषु सत्यमाहितम् ।**
**एवा मे वरणो मणिः कीर्तिं भूतिं नि यच्छतु**
**तेजसा मा समुक्षतु यशसा समनक्तु मा ॥ २५ ॥ (९)**

यथा । देवेषु । अमृतम् । यथा । एषु । सत्यम् । आऽहितम् ।
एव । मे । वरणः । मणिः । कीर्तिम् । भूतिम् । नि । यच्छतु ।
तेजसा । मा । सम् । उक्षतु । यशसा । सम् । अनक्तु । मा ॥ २५ ॥ (९)

इति द्वितीयेनुवाके प्रथमं सूक्तम् ॥

अस्मिन् सूक्ते नानासर्पास्तेषां च विषाणि तत्तत्प्रतीकाराश्च कविवाग्विषयः । सर्पविषभैषज्ये च मन्त्राः । सर्पविषहारिकाश्च काश्चिदोषधयः ॥ साम्प्रदायिका एवं विनियोजयन्ति । तद् यथा ।

विषभैषज्ये कर्मणि "इन्द्रस्य प्रथमः" इत्यर्थसूक्तस्य "ब्राह्मणो जज्ञे" इति [४. ६] सूक्तवद् विनियोगोवगन्तव्यः ॥

तथा तत्रैव कर्मणि अनेन सूक्तेन पैद्व पिष्ट्वा अभिमन्त्र्य दक्षिणेनाङ्गुष्ठेन दक्षिणनासापुटे नस्य ददाति ॥ "पैद्वं कीटकम् । तलिणीति लोके प्रसिद्धा । तं पिष्ट्वा" इति केशवः "पैद्वः हिरण्यवर्णसदृशः कीटश्चित्रितो वा । स पैद्व इत्युच्यते" इति च ॥

तथा "अहिभये अनेन सूक्तेन श्वेतवस्त्रवेष्टित पैद्वम् अभिमन्त्र्य यत्राहिभय तत्र निखनति" इति केशवः ॥ "सर्पाद्भये पैद्व वस्त्रे बद्ध्वा स्थापयति तस्मिन् वेश्मनि" इति दारिलः ॥

शङ्काविषभैषज्ये कर्मणि "अङ्गादङ्गात् प्र च्यावय" इति ऋचा[२५] सर्पदष्ट शिरःप्रभृति आप्रपदान्त हस्तेन मार्ष्टि ।

तत्रैव कर्मणि "आरे अभूत्" इति ऋचा [२६] उल्मुक प्रताप्य अभिमन्त्र्य ततो विषव्रणं दृष्ट्वा तत्संमुखं क्षिपति । सर्पादर्शने यतो दष्टस्ततो निरस्यति उल्मुकम् ॥

तद् उक्तं कौशिकेन । "इन्द्रस्य प्रथम इति तक्षकायेति [कौ° ४.४] उक्तम् [४.६] । पैद्वं प्रकर्ष्य दक्षिणेनाङ्गुष्ठेन द-
"क्षिणस्यां नस्तः । अहिभये सिच्यवगूहयति । अङ्गादङ्गाद् इत्या प्रपदात् । दंश्मोत्तमया निताप्याहिम् अभि निरस्यति यतो
"दष्टः" इति [कौ° ४.८] ॥

**इन्द्रस्य प्रथमो रथो देवानामपरो रथो वरुणस्य तृतीय इत् ।**
**अहीनामपमा[1] रथ[2] स्थाणुमारदथार्षत्[3] ॥ १ ॥**

इन्द्रस्य । प्रथमः । रथः । देवानाम् । अपरः । रथः । वरुणस्य । तृतीयः । इत् ।
अहीनाम् । अपऽमा[1] । रथः । स्थाणुम् । आरत् । अथ । अर्षत् ॥ १ ॥

---

१ So all our authorities. Should not we read अपमो? २ B B̊[h] D S̊[m] Cs रथः स्थाणु°. We with A K̊[m] R V Dc. ३ A D R S̊[m] °थारिषत्. Cs °थारषत्. We with B̊[h] K K̊[m] V Dc.

दर्भः शोचिस्तरूणकमश्वस्य वारः परुषस्य वारः ।
रथस्य बन्धुरम् ॥ २ ॥

दर्भः । शोचिः । तरूणकम् । अश्वस्य । वारः । परुषस्य[1] । वारः ।
रथस्य । बन्धुरम् ॥ २ ॥

अव श्वेत पदा जहि पूर्वेण चापरेण च ।
उदप्लुतमिव दार्वहीनामरसं विषं वारुग्रम्[2] ॥ ३ ॥

अव । श्वेत । पदा । जहि । पूर्वेण । च । अपरेण । च ।
उदप्लुतम्ऽइव । दारु । अहीनाम् । अरसम् । विषम् । वाः । उग्रम् ॥ ३ ॥

अरंघुषो निमज्योन्मज्य पुनरब्रवीत् ।
उदप्लुतमिव दार्वहीनामरसं विषं वारुग्रम्[2] ॥ ४ ॥

अरम्ऽघुषः । निऽमज्य । उत्ऽमज्य । पुनः । अब्रवीत् ।
उदप्लुतम्ऽइव । दारु । अहीनाम् । अरसम् । विषम् । वाः[2] । उग्रम् ॥ ४ ॥

पैद्वो हन्ति कसर्णीलं पैद्वः श्वित्रमुतासितम्[3] ।
पैद्वो रथर्व्याः शिरः सं बिभेद पृदाकाः ॥ ५ ॥

पैद्वः । हन्ति । कसर्णीलम् । पैद्वः । श्वित्रम्[3] । उत । असितम् ।
पैद्वः । रथर्व्याः । शिरः । सम् । बिभेद । पृदाकाः ॥ ५ ॥

पैद्व प्रेहि प्रथमोनु त्वा वयमेमसि ।
अहीन् व्यस्यतात् पथो येन स्मा वयमेमसि ॥ ६ ॥

पैद्व । प्र । इहि । प्रथमः । अनु । त्वा । वयम् । आ । ईमसि ।
अहीन् । वि । अस्यतात् । पथः । येन । स्म । वयम् । आऽईमसि ॥ ६ ॥

इदं पैद्वो अजायतेदमस्य परायणम् ।
इमान्यर्वतः पदाहिघ्न्यो[4][5] वाजिनीवतः ॥ ७ ॥

---

१ K पुरुषस्य ।. K reads पु° in the *Saṁhitâ* too. २ A D R Cs P J वारुग्रम्. We with B̊ K K̊ S̊ V Dc P̊ Cp. ३ A B̊ K K̊ R V Dc पैद्वःश्वित्र°. J श्वित्रम् ।. P P̊ श्वि-त्रम् ।. Cp चित्रम् ।. We with D S̊ Cs P P̊. ४ R पदाअहिघ्न्यो. ५ A P J °हिघ्न्यो. We with B̊ D K K̊ R S̊ V Dc Cs.

इदम् । पैद्वः । अजायत । इदम् । अस्य । पराऽअयनम् ।
इमानि । अर्वतः । पदा । अहिऽघ्न्यः । वाजिनीऽवतः ॥ ७ ॥

**संयतं न वि ष्परद् व्यात्तं न सं यमत् ।**
**अस्मिन् क्षेत्रे द्वावही स्त्री च पुमांश्च तावुभावरसा ॥ ८ ॥**

समऽयतम् । न । वि । स्परत् । विऽआत्तम् । न । सम् । यमत् ।
अस्मिन् । क्षेत्रे । द्वौ । अही इति । स्त्री । च । पुमान् । च । तौ । उभौ । अरसा ॥ ८ ॥

**अरसास इहाहयो ये अन्ति ये च दूरके ।**
**घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् ॥ ९ ॥**

अरसासः । इह । अहयः । ये । अन्ति । ये । च । दूरके ।
घनेन । हन्मि । वृश्चिकम् । अहिम् । दण्डेन । आऽगतम् ॥ ९ ॥

**अघाश्वस्येदं भेषजमुभयोः स्वजस्य च ।**
**इन्द्रो मेहिमघायन्तमहिं पैद्वो अरन्धयत् ॥ १० ॥ (१०)**

अघऽअश्वस्य । इदम् । भेषजम् । उभयोः । स्वजस्य । च ।
इन्द्रः । मे । अहिम् । अघऽयन्तम् । अहिम् । पैद्वः । अरन्धयत् ॥ १० ॥ (१०)

**पैद्वस्य मन्महे वयं स्थिरस्य स्थिरधाम्नः ।**
**इमे पश्चा पृदाकवः प्रदीध्यत आसते ॥ ११ ॥**

पैद्वस्य । मन्महे । वयम् । स्थिरस्य । स्थिरऽधाम्नः ।
इमे । पश्चा । पृदाकवः । प्रऽदीध्यतः । आसते ॥ ११ ॥

**नष्टासवो नष्टविषा हता इन्द्रेण वज्रिणा ।**
**जघानेन्द्रो जघ्निमा वयम् ॥ १२ ॥**

नष्टऽअसवः । नष्टऽविषाः । हताः । इन्द्रेण । वज्रिणा ।
जघान । इन्द्रः । जघ्निम । वयम् ॥ १२ ॥

---

१ P पादा ।. २ P J अहिऽघ्न्यः ।. P̊ अहिंऽघ्नयः ।. We with Cp. ३ B has corrected this into अंती. A B̊ D K K̊ R Cs अंति. P J अंति ।. We with S̊ V Dc P̊ Cp ४ P दुरके ।. ५ R जघ्निमा.

हृतास्तिरंश्चिराजयो निपिष्टासः पृदाकवः ।
दर्विं करिक्रतं श्वित्रं दर्भेष्वसितं जहि ॥ १३ ॥

हृताः । तिरश्चिऽराजयः । निऽपिष्टासः । पृदाकवः ।
दर्विम् । करिक्रतम् । श्वित्रम् । दर्भेषु । असितम् । जहि ॥ १३ ॥

कैरातिका कुमारिका सका खनति भेषजम् ।
हिरण्ययीभिरभ्रिभिर्गिरीणामुप सानुषु ॥ १४ ॥

कैरातिका । कुमारिका । सका । खनति । भेषजम् ।
हिरण्ययीभिः । अभ्रिऽभिः । गिरीणाम् । उप । सानुषु ॥ १४ ॥

आयमगन् युवा भिषक् पृश्निहापराजितः ।
स वै स्वजस्य जम्भन उभयोर्वृश्चिकस्य च ॥ १५ ॥

आ । अयम् । अगन् । युवा । भिषक् । पृश्निऽहा । अपराऽजितः ।
सः । वै । स्वजस्य । जम्भनः । उभयोः । वृश्चिकस्य । च ॥ १५ ॥

इन्द्रो मेहिमरन्धयन्मित्रश्च वरुणश्च ।
वातापर्जन्योऽभा ॥ १६ ॥

इन्द्रः । मे । अहिम् । अरन्धयत् । मित्रः । च । वरुणः । च ।
वातापर्जन्या । उभा ॥ १६ ॥

इन्द्रो मेहिमरन्धयत् पृदाकुं च पृदाकम् ।
स्वजं तिरश्चिराजिं कसर्णीलं दशोनसिम् ॥ १७ ॥

इन्द्रः । मे । अहिम् । अरन्धयत् । पृदाकुम् । च । पृदाकम् ।
स्वजम् । तिरश्चिऽराजिम् । कसर्णीलम् । दशोनसिम् ॥ १७ ॥

इन्द्रो जघान प्रथमं जनितारमहे तव ।
तेषामु तृह्यमाणानां कः स्वित् तेषामसद् रसः ॥ १८ ॥

इन्द्रः । जघान । प्रथमम् । जनितारम् । अहे । तव ।

---

१ A B K K̊ V Dc श्वित्र. P P̊ J श्वित्रम् ।. We with B̊ D R S̊ Cs Cp. २ D °मुभयो°
३ D K °न्योऽभा. We with B̊ K̊ R S̊ V Dc Cs.

तेषाम्। ऊं इति। तृह्यमाणानाम्। कः। स्वित्। तेषाम्। असत्। रसः॥ १८॥

**सं हि शीर्षाण्यग्रभं पौञ्जिष्ठ इव कर्वरम्।**
**सिन्धोर्मध्यं परेत्य व्यनिजमहेर्विषम्॥ १९॥**

सम्। हि। शीर्षाणि। अग्रभम्। पौञ्जिष्ठःऽइव। कर्वरम्।
सिन्धोः। मध्यम्। पराऽइत्य। वि। अनिजम्। अहेः। विषम्॥ १९॥

**अहीनां सर्वेषां विषं परा वहन्तु सिन्धवः।**
**हतास्तिरश्चिराजयो निपिष्टासः पृदाकवः॥ २०॥ (११)**

अहीनाम्। सर्वेषाम्। विषम्। परा। वहन्तु। सिन्धवः।
हताः। तिरश्चिऽराजयः। निऽपिष्टासः। पृदाकवः॥ २०॥ (११)

**ओषधीनामहं वृण उर्वरीरिव साधुया।**
**नयाम्यर्वतीरिवाहे निरैतु ते विषम्॥ २१॥**

ओषधीनाम्। अहम्। वृणे। उर्वरीःऽइव। साधुऽया।
नयामि। अर्वतीःऽइव। अहे। निःऽऐतु। ते। विषम्॥ २१॥

**यदग्नौ सूर्ये विषं पृथिव्यामोषधीषु यत्।**
**कान्दाविषं कनक्नकं निरैत्वैतु ते विषम्॥ २२॥**

यत्। अग्नौ। सूर्ये। विषम्। पृथिव्याम्। ओषधीषु। यत्।
कान्दाऽविषम्। कनक्नकम्। निःऽऐतु। आ। एतु। ते। विषम्॥ २२॥

**ये अग्निजा ओषधिजा अहीनां ये अप्सुजा विद्युत आबभूवुः।**
**येषां जातानि बहुधा महान्ति तेभ्यः सर्पेभ्यो नमसा विधेम॥ २३॥**

ये। अग्निऽजाः। ओषधिऽजाः। अहीनाम्। ये। अप्सुऽजाः। विऽद्युतः। आऽबभूवुः।
येषाम्। जातानि। बहुऽधा। महान्ति। तेभ्यः। सर्पेभ्यः। नमसा। विधेम॥ २३॥

**तौदी नामासि कन्या घृताची नाम वा असि।**
**अधस्पदेन ते पदमा ददे विषदूषणम्॥ २४॥**

---

१ A B[h] D R S[m] V Dc पौञ्जिष्ट. P पौञ्जिष्टः° l. We with K K[m] C₅ P[2] J Cp. २ B[h] कनिक्नकं. D Cs कनन्कंकं. K[m] कनत्कंकं. We with A R S[m] V Dc P P[2] J Cp. ३ P बहुधा l.

तौर्दी । नाम॑ । अ॒सि॒ । क॒न्या᳚ । घृ॒ताची॑ । नाम॑ । वै । अ॒सि॒ ।
अ॒धः॒ऽप॒देन॑ । ते॒ । प॒दम् । आ । द॒दे॒ । वि॒ष॒ऽदूष॑णम् ॥ २४ ॥

अङ्गा॑दङ्गा॒त् प्र च्या॑वय॒ हृद॑यं॒ परि॑ वर्जय ।
अधा॑ वि॒षस्य॒ यत् तेजो॑ऽवा॒चीनं॒ तदे॑तु ते ॥ २५ ॥

अङ्गा॑त्ऽअङ्गात् । प्र । च्य॒व॒य॒ । हृद॑यम् । परि॑ । व॒र्ज॒य॒ ।
अध॑ । वि॒षस्य॑ । यत् । तेज॑ः । अ॒वा॒चीन॑म् । तत् । ए॒तु॒ । ते॒ ॥ २५ ॥

आ॒रे अ॑भूद् वि॒षम॑रौद् वि॒षे वि॒षम॑प्रा॒गपि॑ ।
अ॒ग्निर्वि॒षमहे॒र्निर॑धा॒त् सोमो॒ निर॑णयीत् ।
दं॒ष्टार॒मन्व॑गाद् वि॒षमहि॑रमृत ॥ २६ ॥ (१२)

आ॒रे । अ॒भू॒त् । वि॒षम् । अ॒रौ॒त् । वि॒षे । वि॒षम् । अ॑प्राक् । अपि॑ ।
अ॒ग्निः । वि॒षम् । अहे॑ः । निः । अ॒धा॒त् । सोम॑ः । निः । अ॒न॒यी॒त् ।
दं॒ष्टार॑म् । अनु॑ । अ॒गा॒त् । वि॒षम् । अहि॑ः । अ॒मृ॒त॒ ॥ २६ ॥ (१२)

द्वितीयेनुवाके द्वितीयं सूक्तम् ॥

इति द्वितीयोनुवाकः ॥

अभिचारकर्मैतत् । शत्रुनाशनसमर्थबलम् उदके प्रवेश्य तदुदके वज्रत्वं कल्पयित्वा शत्रुम् अभिलक्ष्य तत् प्रक्षिपति । तद् एवम् । आदावप· सबोध्य यस्माद् यूयम् इन्द्रस्यौजो भवथ इन्द्रस्य सहआदि भवथ तस्माद् इन्द्रबलैर्युष्मान् युक्ताः करोमीत्याह । अनन्तरम् इन्द्रस्य भाग· अर्थाद् अशो भवथ सोमस्य भागः स्थ वरुणस्य भाग· स्थ मित्रावरुणयोर्भागः स्थ यमस्य भागः स्थ पितॄणां सवितुश्च भागः स्थेत्याह । अनन्तर योऽपा त्रैलोक्यस्थसकलजलानां भागः पूजनीयो युष्मासु अर्थात् पूर्वोक्तास्वप्सु भवति यश्च तादृश ऊर्मिःयश्च तादृशो वत्सः अर्थाद् अपां नपान्नाम वैद्युतोग्नि· यश्च तादृशो वृषभः महाबलः कश्चित् पशु· यश्च अपां मध्य उदपद्यतेति वेदप्रसिद्धो हिरण्यगर्भ इति बलवान् आद्यो देवः यश्च अप्सु वर्तमानो नानावर्णोऽश्मप्रतीको मेघः ये च अपां मध्ये वर्तमाना अग्नयस्तान् सर्वान् प्रत्येक शत्रु प्रति क्षिपामि त शत्रुम् अह हन्यां तम् अनेन मन्त्रेण अनेन कर्मणा अनेन उदवज्रेण विदारयाणीत्याह । अनन्तर स्वकृतात् त्रैहायणाद् अनृतवचनपापाद् रक्षण याचते । अनन्तरं शत्रोरुपरि उदवज्र प्रक्षेप्तु प्रक्रामति यच्च प्रक्रामति स्वक्रमं सबोध्य तम् आह त्व विष्णोः क्रमोसि अर्थाद् येन क्रमेण विष्णुस्त्रीन् लोकान् आक्रमत तादृशो बलवान् असि स्वय पृथ्व्या च तीक्ष्णीकृत शस्त्रम् असि तेन त्वया शत्रु पृथिव्या· सकाशान्निर्णोदयामीति । तथैव त्वम् अन्तरिक्षतीक्ष्णीकृतोसि द्यौसशितोसि दिक्सशितोसि आशासंशितोसि ऋक्सशितोसि यज्ञसशितोसि ओषधीसशितोसि अप्सशितोसि कृषिसशितोसि प्राणसशितोसि तस्मात् तत्तदभिमानिप्रदेशात् त शत्रु निर्णोदयानीति । एतदुक्त्वा जितमस्माभिर्जिताः शत्रुसेना इत्याह । अनन्तर दक्षिणा दिश सरति किंचित्सृत्वा ताम् अभिमुखो भवतीत्यर्थः । तथैव इतरदिशश्च सप्तर्षिनाम नक्षत्र ब्राह्मणाश्च अभिमुखो भवति प्रत्येक च तेभ्यः सकाशाद् द्रविण याचते । य च शत्रुम् अन्विष्यामि तं हनानि इय समित् तं हेतिर्भूत्वा भक्षतु इत्याह । अनन्तरं भुवस्पतिमन्न याचते तथैव अग्नि वर्चः प्रजाम् आयुश्च याचते । अग्नि च यातुधानभेदन याचते । अन्ते च

---

१ K अथा॑ ( अथ॑ in the *padas* ). २ Dc वि॒षम॑प्रा॒गपि॑ subsequently changed to वि॒षम॒प्रा॒गपि॑. A B $\overset{h}{B}$ D K $\overset{m}{K}$ R $\overset{m}{S}$ V Cs वि॒षम॒प्रा॒गपि॑. $\overset{2}{P}$ Cp अ॒प्राक् ।. We with J P.

पूर्वोक्तानि यान्युदकानि तान्येव चतुर्भ्रष्टि वज्रं कल्पयित्वा शत्रुशिरश्छेदाय प्रक्षिपति स च शत्रोरङ्गानि भिनत्तु देवाश्च तन् सर्वे मेऽनुजानन्त्वित्याशास्ते ॥

सांप्रदायिकास्तु वक्ष्यमाणप्रकारेण तस्मिन्नेव कर्मणि विनियुञ्जन्ति सूक्तम् ।

अभिचारकर्मणि उदवज्राणा विधानम् उच्यते । "इन्द्रस्यौज" इति सूक्तस आद्यानां षण्णान् ऋचान् पूर्वार्धर्चैः कास्य-घट प्रक्षालयति । "जिष्णवे योगाय" इति उत्तरार्धर्चैः षड्भिः कांस्यघटम् उदकसर्मापे निदधाति । "इदम् अहं यो मा प्राच्या दिश" इत्यष्टर्चेन कल्पजेन सूक्तेन उदकमध्ये निदधाति घटम् । "इदम् अहम्" इति सूक्तेन उदकमध्ये घटस्य मुख करोति । "इदमह यो मा प्राच्या दिशः" इति सूक्तेन घटम् उदकपूर्ण कृत्वा अपक्रामति । "इदमहम्" इति सूक्तेन उदकपूर्ण घट मण्डपे स्थापयति । एतद् अभिचारे उदकाहरणम् । तदनन्तरं वज्रप्रहरणविधि. । "इन्द्रस्यौजः" इति सर्वं कृत्वा "इदमहम्" इति स्थापनान्त कृत्वा "अग्नेर्भागः" [७–१४] इत्याद्यष्टाभिर्ऋग्भिः आनीतोदकस्य द्विधाकरणम् । अर्ध घटे कृत्वा अर्ध भाजने करोति । तद्भाजनम् अग्नौ तापयति । घटम् अन्यस्मै पुरुषाय प्रदापयति । "अग्नेर्भागः" इत्यादयोष्टौ तापने मन्त्राः । ततो बहिर्दक्षिणामुख उपविश्य भाजनम् अग्रे कृत्वा "वातस रहितस" इति सौत्रमन्त्रेण उदक सगृह्य "शम् अग्नये" इति कल्पजेन सूक्तेन सर्वेभ्यो भूतेभ्योऽभयं दद्यात् । "यो व आपोपाम्" [१५] इत्यृचा वज्रप्रक्षेपः ॥ पुनरपि "वातस्य रहितस" इत्यादि कृत्वा "यो व आपोपामूर्मिः" [१६] इति ऋचा वज्रप्रक्षेपः । एवम् उत्तराभिर्ऋग्भिः [१७–२१] वज्रप्रक्षेपः । "एनानधराचः पराचः" इति कल्पजया ऋचा भाजनस्थम् उदक भूमौ निनयति । एवमेव "य वयम्" [४२] इति सूक्तेन अन्वृचम् "अपामस्मै वज्रम्" [५०] इति ऋचा च वज्रप्रक्षेप । "विष्णोः क्रमोसि" [२५–३६] इति द्वादशभिर्विष्णुक्रमान् क्रमते शत्रोरभिमुखम् । तद् उक्त कौशिकेन । "इन्द्रस्यौज इति प्रक्षालयति । जिष्णवे यो"ायेत्यपो युनक्ति । "वातस्य रहितस्यामृतस्य योनिरिति प्रतिगृह्णाति । उत्तमाः प्रताप्याधरा प्रदायैनमेनानधराच पराचोवाश्चैस्तपसस्तमनैयत "देवाः पितृभिः सविदानः प्रजापतिः प्रथमो देवतानाम् इत्यतिसृजति । इदम् अहं यो मा प्राच्या दिशोघायुरभिदासादपवा-"दीदिषुगूहः । तस्येमौ प्राणापानावपक्रामामि ब्रह्मणा । दक्षिणायाः प्रतीच्या उदीच्या ध्रुवाया व्यध्वाया ऊर्ध्वायाः । इदम् अहं "यो मा दिशाम् अन्तर्देशेभ्य इत्यपक्रामामीति । एवम् अभिष्ठानापोहननिवेष्टनानि । सर्वाणि खलु शश्वद् भतानि ब्राह्मणाद् "वज्रम् उद्यच्छमानाच्छङ्कन्ते मां हनिष्यसि मां हनिष्यसीति । तेभ्योभयं वदेच्छम् अग्नये श पृथिव्यै शम् अन्तरिक्षाय श वायवे "श दिवे शं सूर्याय शं चन्द्राय श नक्षत्रेभ्यः श गन्धर्वाप्सरोभ्यः श सर्पेतरजनेभ्यः शिव मह्यम् इति । यो व आपोपां य "वयम् अपाम् अस्मै वज्रम् इत्यन्वृचम् उदवज्रान् । विष्णोः क्रमोसीति विष्णुक्रमान्" इति [कौ° ६. ३] ॥

"यदर्वाचीनम्" इति ऋचा [२२] आचामयति अनृतभाषणसजातपापापनोदनकामम् ॥

"समुद्र व. प्र हिणोमि" इति ऋचा [२३] पत्न्यञ्जलावुदपात्र निनयति सर्वेषु तन्त्रेषु । "बर्हिषि पत्न्यञ्जलौ निनयति समुद्र वः प्र हिणोमि" इति [कौ° १. ६] सूत्रात् ॥

"सूर्यस्यावृतम्" इति पञ्चभिः [३७–४१] प्रदक्षिणम् आवर्तते सर्वेषु तन्त्रेषु । "सूर्यस्यावृतम् इत्यभिदक्षिणम् आवर्तते" इति [कौ° १. ६] सूत्रात् ॥

**इन्द्र॑स्यौज॒ स्थेन्द्र॑स्य॒ सह॒ स्थेन्द्र॑स्य॒ बलं॒ स्थेन्द्र॑स्य वी॒र्यं॑१ स्थेन्द्र॑स्य नृ॒म्णं स्थ॑ । जिष्ण॑वे॒ योगा॑य ब्रह्मयो॒गैर्वो॑ युनज्मि ॥ १ ॥**

इन्द्र॑स्य । ओजः॑ । स्थ॒ । इन्द्र॑स्य । सहः॑ । स्थ॒ । इन्द्र॑स्य । बल॑म् । स्थ॒ । इन्द्र॑स्य । वी॒र्य॑म् । स्थ॒ । इन्द्र॑स्य । नृ॒म्णम् । स्थ॒ ।

१ B वीर्यं३स्थे°.

1 So V1 and V2. 2 So V1 and V2. 3 V1 °घूगू°. We with V2. 4 V1 V2 °ष्टाना°. 5 V2 ब्राह्मणा. 6 V1 V2 °माना: शंकंते.

जिष्णवे । योगाय । ब्रह्मऽयोगैः । वः । युनज्मि ॥ १ ॥

**इन्द्रस्यौज० । जिष्णवे योगाय क्षत्रयोगैर्वो युनज्मि ॥ २ ॥**

०योगाय । क्षत्रऽयोगैः । वः ।० ॥ २ ॥

**इन्द्रस्यौज० । जिष्णवे योगायेन्द्रयोगैर्वो युनज्मि ॥ ३ ॥**

०योगाय । इन्द्रऽयोगैः । वः ।० ॥ ३ ॥

**इन्द्रस्यौज० । जिष्णवे योगाय सोमयोगैर्वो युनज्मि ॥ ४ ॥**

०योगाय । सोमऽयोगैः । वः ।० ॥ ४ ॥

**इन्द्रस्यौज० । जिष्णवे योगायाप्सुयोगैर्वो युनज्मि ॥ ५ ॥**

०योगाय । अप्सुऽयोगैः । वः । युनज्मि ॥ ५ ॥

**इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्यं[1] स्थेन्द्रस्य नृम्णं स्थ ।**
**जिष्णवे योगाय विश्वानि मा भूतान्युप तिष्ठन्तु युक्ता म आप स्थ ॥ ६ ॥**

इन्द्रस्य । ओजः । स्थ । इन्द्रस्य । सहः । स्थ । इन्द्रस्य । बलम् । स्थ । इन्द्रस्य । वीर्यम् । स्थ । इन्द्रस्य । नृम्णम् । स्थ ।

जिष्णवे । योगाय । विश्वानि । मा । भूतानि । उप । तिष्ठन्तु । युक्ताः । मे । आपः । स्थ ॥ ६ ॥

**अग्नेर्भाग स्थ ।**
**अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।**
**प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥ ७ ॥**

अग्नेः । भागः । स्थ ।
अपाम् । शुक्रम् । आपः । देवीः । वर्चः । अस्मासु । धत्त ।
प्रजाऽपतेः । वः । धाम्ना । अस्मै । लोकाय । सादये ॥ ७ ॥

**इन्द्रस्य भाग स्थ ।०।०। ॥ ८ ॥**

इन्द्रस्य । भागः ।० ॥ ८ ॥

**सोमस्य भाग स्थ ।०।०। ॥ ९ ॥**

सोमस्य । भागः ।० ॥ ९ ॥

---

१ B वीर्य३ स्थे°.

वरुणस्य भाग स्थ ।०।० ॥ १० ॥ (१३)

वरुणस्य । भागः ।० ॥ १० ॥ (१३)

मित्रावरुणयोर्भाग स्थ ।०।० ॥ ११ ॥

मित्रावरुणयोः । भागः ।० ॥ ११ ॥

यमस्य भाग स्थ ।०।० ॥ १२ ॥

यमस्य । भागः ।० ॥ १२ ॥

पितृणां भाग स्थ ।०।० ॥ १३ ॥

पितृणाम् । भागः ।० ॥ १३ ॥

देवस्य सवितुर्भाग स्थ ।
अपां शुक्रमापो देवीर्वर्चो अस्मासु धत्त ।
प्रजापतेर्वो धाम्नास्मै लोकाय सादये ॥ १४ ॥

देवस्य । सवितुः । भागः । स्थ ।
अपाम् । शुक्रम् । आपः । देवीः । वर्चः । अस्मासु । धत्त ।
प्रजाऽपतेः । वः । धाम्ना । अस्मै । लोकाय । सादये ॥ १४ ॥

यो व आपोपां भागो३प्स्व१न्तर्यजुष्यो᳡ देवयजनः ।
इदं तमति सृजामि तं माभ्यवनिक्षि ।
तेन तमभ्यतिसृजामो यो३स्मान् द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ॥ १५ ॥

यः । वः । आपः । अपाम् । भागः । अप्ऽसु । अन्तः । यजुष्यः᳡ । देवऽयजनः ।
इदम् । तम् । अति । सृजामि । तम् । मा । अभिऽअवनिक्षि ।
तेन । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ।
तम् । वधेयम् । तम् । स्तृषीय । अनेन । ब्रह्मणा । अनेन । कर्मणा । अनया । मेन्या ॥ १५ ॥

यो व आपोपामूर्मिरप्सु ०।०।०।० ॥ १६ ॥

---

१ K K̈ भागो१प्स्व॰ २ B माभ्यव॰. P मा । अभिऽ॰. We with A B D K K̈ Ŝ V Dc C P J Cr. ३ K K̈ V यो ।स्मा॰.

०अपाम् । ऊर्मिः । अप्ऽसु ।० ॥ १६ ॥

यो वं आपोपां वत्सो३ऽप्सु ०।०।०।० ॥ १७ ॥

०अपाम् । वत्सः । अप्ऽसु ।० ॥ १७ ॥

यो वं आपोपां वृषभो३ऽप्सु ०।०।०।० ॥ १८ ॥

०अपाम् । वृषभः । अप्ऽसु ।० ॥ १८ ॥

यो वं आपोपां हिरण्यगर्भो३ऽप्सु ०।०।०।० ॥ १९ ॥

०अपाम् । हिरण्यऽगर्भः । अप्ऽसु ।० ॥ १९ ॥

यो वं आपोपामश्मा पृश्निर्दिव्यो३ऽप्सु ०।०।०।० ॥ २० ॥ (१४)

यः । वः । आपः । अपाम् । अश्मा । पृश्निः । दिव्यः । अप्ऽसु । अन्तः । यजुष्यः । देवऽयजनः ।

इदम् । तम् । अति । सृजामि । तम् । मा ।० ॥ तेन । तम् ।० ॥ २० ॥ (१४)

ये वं आपोपामग्नयोप्स्व१न्तर्यजुष्या३ देवयजनाः ।
इदं तानति सृजामि तान् माभ्यवनिक्षि ।
तैस्तमभ्यतिसृजामो यो३ऽस्मान् द्वेष्टि यं वयं द्विष्मः ।
तं वधेयं तं स्तृषीयानेन ब्रह्मणानेन कर्मणानया मेन्या ॥ २१ ॥

ये । वः । आपः । अपाम् । अग्नयः । अप्ऽसु । अन्तः । यजुष्याः । देवऽयजनाः ।
इदम् । तान् । अति । सृजामि । तान् । मा । अभिऽअवनिक्षि ।
तैः । तम् । अभिऽअतिसृजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ।
तम् । वधेयम् । तम् । स्तृषीय । अनेन । ब्रह्मणा । अनेन । कर्मणा । अनया । मेन्या ॥ २१ ॥

यदर्वाचीनं त्रैहायणादनृतं किं चोदिम ।
आपो मा तस्मात् सर्वस्माद् दुरितात् पान्त्वंहसः ॥ २२ ॥

यत् । अर्वाचीनम् । त्रैहायनात् । अनृतम् । किम् । च । ऊदिम ।

---

१ B̊ K K̊ V Cs वत्सो१. We with Dc. २ B̊ K K̊ S̊ वृषभो१. We with Dc ३ K K̊ V °गर्भो१. We with B̊ Dc. ४ P मा ।. ५ K K̊ V यो१स्मा°. We with B̊ D S̊ Dc Cs. ६ B D K̊ R Cp. °पात्वंहसः. We with A B̊ K S̊ V Dc Cs P P̊ J

आपः । मा । तस्मात् । सर्वस्मात् । दुःऽइतात् । पान्तु । अंहसः ॥ २२ ॥

समुद्रं वः प्र हिणोमि स्वां योनिमपीतन ।
अरिष्टाः सर्वहायसो मा च नः किं चनाममत् ॥ २३ ॥

समुद्रम् । वः । प्र । हिणोमि । स्वाम् । योनिम् । अपि । इतन ।
अरिष्टाः । सर्वऽहायसः । मा । च । नः । किम् । चन । आममत् ॥ २३ ॥

अरिप्रा आपो अप रिप्रमस्मत् ।
प्रास्मदेनो दुरितं सुप्रतीकाः प्र दुष्वप्न्यं प्र मलं वहन्तु ॥ २४ ॥

अरिप्राः । आपः । अप । रिप्रम् । अस्मत् ।
प्र । अस्मत् । एनः । दुःऽइतम् । सुऽप्रतीकाः । प्र । दुःऽस्वप्न्यम् । प्र । मलम् । वहन्तु ॥२४॥

विष्णोः क्रमोऽसि सपत्नहा पृथिवीसंशितोऽग्नितेजाः ।
पृथिवीमनु वि क्रमेऽहं पृथिव्यास्तं निर्भजामो यो३ऽस्मान्द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत् तं प्राणो जहातु ॥ २५ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । पृथिवीऽसंशितः । अग्निऽतेजाः ।
पृथिवीम् । अनु । वि । क्रमे । अहम् । पृथिव्याः । तम् । निः । भजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ।
सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ २५ ॥

विष्णोः क्रमोऽसि सपत्नहान्तरिक्षसंशितो वायुतेजाः ।
अन्तरिक्षमनु वि क्रमेऽहमन्तरिक्षात् तं निर्भजामो ०।० ॥ २६ ॥

०सपत्नऽहा । अन्तरिक्षऽसंशितः । वायुऽतेजाः ।
अन्तरिक्षम् । अनु । वि । क्रमे । अहम् । अन्तरिक्षात् । तम् ।० ॥ २६ ॥

विष्णोः क्रमोऽसि सपत्नहा द्यौसंशितः सूर्यतेजाः ।
दिवमनु वि क्रमेऽहं दिवस्तं ०।० ॥ २७ ॥

०सपत्नऽहा । द्यौऽसंशितः । सूर्यऽतेजाः ।
दिवम् । अनु । वि । क्रमे । अहम् । दिवः । तम् ।० ॥ २७ ॥

---

१ K K[m] V यो३स्मा॰. We with B[h] D S[m] Dc Cs.

विष्णोः क्रमोसि सपत्नहा दिक्संशितो मनस्तेजाः ।
दिशोनु वि क्रमेहं दिग्भ्यस्तं ०।० ॥ २८ ॥

०सपत्नऽहा । दिक्ऽसंशितः । मनःऽतेजाः ।
दिशः । अनु । वि । क्रमे । अहम् । दिक्ऽभ्यः । तम् ।० ॥ २८ ॥

विष्णोः क्रमोसि सपत्नहाशासंशितो वाततेजाः ।
आशा अनु वि क्रमेहमाशाभ्यस्तं ०।० ॥ २९ ॥

०सपत्नऽहा । आशाऽसंशितः । वातऽतेजाः ।
आशाः । अनु । वि । क्रमे । अहम् । आशाभ्यः । तम् ।० ॥ २९ ॥

विष्णोः क्रमोसि सपत्नह ऋक्संशितः सामतेजाः ।
ऋचोनु वि क्रमेहमृग्भ्यस्तं ०।० ॥ ३० ॥ (१५)

०सपत्नऽहा । ऋक्ऽसंशितः । सामऽतेजाः ।
ऋचः । अनु । वि । क्रमे । अहम् । ऋक्ऽभ्यः । तम् ।० ॥ ३० ॥ (१५)

विष्णोः क्रमोसि सपत्नहा यज्ञसंशितो ब्रह्मतेजाः ।
यज्ञमनु वि क्रमेहं यज्ञात् तं ०।० ॥ ३१ ॥

०सपत्नऽहा । यज्ञऽसंशितः । ब्रह्मऽतेजाः ।
यज्ञम् । अनु । वि । क्रमे । अहम् । यज्ञात् । तम् ।० ॥ ३१ ॥

विष्णोः क्रमोसि सपत्नहौषधीसंशितः सोमतेजाः ।
ओषधीरनु वि क्रमेहमोषधीभ्यस्तं ०।० ॥ ३२ ॥

०सपत्नऽहा । ओषधीऽसंशितः । सोमऽतेजाः ।
ओषधीः । अनु । वि । क्रमे । अहम् । ओषधीभ्यः । तम् ।० ॥ ३२ ॥

विष्णोः क्रमोसि सपत्नहाप्सुसंशितो वरुणतेजाः ।
अपोनु वि क्रमेहमद्भ्यस्तं ०।० ॥ ३३ ॥

०सपत्नऽहा । अप्सुऽसंशितः । वरुणऽतेजाः ।
अपः । अनु । वि । क्रमे । अहम् । अत्ऽभ्यः । तम् ।० ॥ ३३ ॥

---

१ R दिशो॰. २ B K K̄ R V Dc सपत्नहा. We with A D R S̄ Cs. ३ J अपः ।. P अपः ।.

विष्णोः क्रमोऽसि सपत्नहा कृषिसंशितोऽन्नतेजाः ।
कृषिमनु वि क्रमेहं कृष्यास्तं ०।० ॥ ३४ ॥

०सपत्नऽहा । कृषिऽसंशितः । अन्नऽतेजाः ।
कृषिम् । अनु । वि । क्रमे । अहम् । कृष्याः । तम् ।० ॥ ३४ ॥

विष्णोः क्रमोऽसि सपत्नहा प्राणसंशितः पुरुषतेजाः ।
प्राणमनु वि क्रमेहं प्राणात् तं निर्भजामो योऽ३स्मान् द्वेष्टि यं वयं द्विष्मः ।
स मा जीवीत् तं प्राणो जहातु ॥ ३५ ॥

विष्णोः । क्रमः । असि । सपत्नऽहा । प्राणऽसंशितः । पुरुषऽतेजाः ।
प्राणम् । अनु । वि । क्रमे । अहम् । प्राणात् । तम् । निः । भजामः । यः । अस्मान् । द्वेष्टि । यम् । वयम् । द्विष्मः ।
सः । मा । जीवीत् । तम् । प्राणः । जहातु ॥ ३५ ॥

जितमस्माकमुद्भिन्नमस्माकमभ्य॑ष्ठां विश्वाः पृतना अरातीः ।
इदमहमामुष्यायणस्यामुष्याः पुत्रस्य वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥ ३६ ॥

जितम् । अस्माकम् । उत्ऽभिन्नम् । अस्माकम् । अभि । अस्थाम् । विश्वाः । पृतनाः । अरातीः ।
इदम् । अहम् । आमुष्यायणस्य । अमुष्याः । पुत्रस्य । वर्चः । तेजः । प्राणम् । आयुः । नि । वेष्टयामि । इदम् । एनम् । अधराञ्चम् । पादयामि ॥ ३६ ॥

सूर्यस्यावृतमन्वावर्ते दक्षिणामन्वावृतम् ।
सा मे द्रविणं यच्छतु सा मे ब्राह्मणवर्चसम् ॥ ३७ ॥

सूर्यस्य । आऽवृतम् । अनुऽआवर्ते । दक्षिणाम् । अनु । आऽवृतम् ।
सा । मे । द्रविणम् । यच्छतु । सा । मे । ब्राह्मणऽवर्चसम् ॥ ३७ ॥

दिशो ज्योतिष्मतीरभ्यावर्ते ।

---

१ K V कृष्यात्तं° ( V कृष्यात् in the *padas*). २ A R °कमभ्य°. We with Bʰ D K Kᵐ V Dc Cs. ३ B Bʰ °भ्यंष्ठां.

ता मे द्रविणं यच्छन्तु ता मे ब्राह्मणवर्चसम् ॥ ३८ ॥

दिशः । ज्योतिष्मतीः । अभिऽआवर्ते ।

ताः । मे । द्रविणम् । यच्छन्तु । ताः । मे ।० ॥ ३८ ॥

सप्तऋषीनभ्यावर्ते ।

ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥ ३९ ॥

सप्तऽऋषीन् । अभिऽआवर्ते ।

ते । मे । द्रविणम् । यच्छन्तु । ते । मे ।० ॥ ३९ ॥

ब्रह्माभ्यावर्ते ।

तन्मे द्रविणं यच्छतु तन्मे ब्राह्मणवर्चसम् ॥ ४० ॥ (१६)

ब्रह्म । अभिऽआवर्ते ।

तत् । मे । द्रविणम् । यच्छतु । तत् । मे ।० ॥ ४० ॥ (१६)

ब्राह्मणाँ[2] अभ्यावर्ते ।

ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥ ४१ ॥

ब्राह्मणान् । अभिऽआवर्ते ।

ते । मे । द्रविणम् । यच्छन्तु । ते । मे । ब्राह्मणऽवर्चसम् ॥ ४१ ॥

यं वयं मृगयामहे तं वधै स्तृणवामहै ।

व्यात्ते परमेष्ठिनो ब्रह्मणापीपदाम तम् ॥ ४२ ॥

यम् । वयम् । मृगयामहे । तम् । वधैः । स्तृणवामहै ।

विऽआत्ते । परमेऽस्थिनः । ब्रह्मणा । आ । अपीपदाम । तम् ॥ ४२ ॥

वैश्वानरस्य दंष्ट्राभ्यां हेतिस्तं समधादभि ।

इयं तं प्सात्वाहुतिः समिद् देवी सहीयसी ॥ ४३ ॥

वैश्वानरस्य । दंष्ट्राभ्याम् । हेतिः । तम् । सम् । अधात् । अभि ।

इयम् । तम् । प्सातु । आऽहुतिः । सम्ऽइत् । देवी । सहीयसी ॥ ४३ ॥

---

१ D S^m C^s सप्तर्षी°. We with A B^h K K^m R V D^c. २ A D R ब्राह्मणँ. We with B^h K K^m S^m V D^c C^s.

राज्ञो वरुणस्य बन्धोऽसि ।
सोऽ३मुमामुष्यायणममुष्याः पुत्रमन्ने प्राणे बधान ॥ ४४ ॥

राज्ञः । वरुणस्य । बन्धः । असि ।
सः । अमुम् । आमुष्यायणम् । अमुष्याः । पुत्रम् । अन्ने । प्राणे । बधान ॥ ४४ ॥

यत् ते अन्नं भुवस्पत आक्षियति पृथिवीमनु ।
तस्य नस्त्वं भुवस्पते संप्रयच्छ प्रजापते ॥ ४५ ॥

यत् । ते । अन्नम् । भुवः । पते । आऽक्षियति । पृथिवीम् । अनु ।
तस्य । नः । त्वम् । भुवः । पते । सम्ऽप्रयच्छ । प्रजाऽपते ॥ ४५ ॥

अपो दिव्या अचायिषं रसेन समपृक्ष्महि ।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा ॥ ४६ ॥

अपः । दिव्याः । अचायिषम् । रसेन । सम् । अपृक्ष्महि ।
पयस्वान् । अग्ने । आ । अगमम् । तम् । मा । सम् । सृज । वर्चसा ॥ ४६ ॥

सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात् सह ऋषिभिः ॥ ४७ ॥

सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा ।
विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् । सह । ऋषिऽभिः ॥ ४७ ॥

यदग्ने अद्य मिथुना शपातो यद्वाचस्तृष्टं जनयन्त रेभाः ।
मन्योर्मनसः शरव्या३ जायते या तया विध्य हृदये यातुधानान् ॥ ४८ ॥

यत् । अग्ने । अद्य । मिथुना । शपातः । यत् । वाचः । तृष्टम् । जनयन्त । रेभाः ।
मन्योः । मनसः । शरव्या । जायते । या । तया । विध्य । हृदये । यातुऽधानान् ॥ ४८ ॥

परा शृणीहि तपसा यातुधानान् पराग्ने रक्षो हरसा शृणीहि ।
परार्चिषा मूरदेवां छृणीहि परासुतृपः शोशुचतः शृणीहि ॥ ४९ ॥

---

१ K $\overset{m}{K}$ V सो३°. २ From here to verse 6 of next hymn P has no accents
३ K भुवनस्पत. ४ B once had °यं°. K $\overset{m}{K}$ आक्षियंति. We with A $\overset{h}{B}$ D R $\overset{m}{S}$ V Dc C $\overset{2}{P}$ P J.

परा । शृणीहि । तपसा । यातुऽधानान् । परा । अग्ने । रक्षः । हरसा । शृणीहि ।
परा । अर्चिषा । मूरऽदेवान् । शृणीहि । परा । असुऽतृपः । शोशुचतः । शृणीहि ॥ ४९ ॥

**अपामस्मै वज्रं प्र हरामि चतुर्भृष्टिं शीर्षभिद्याय विद्वान् ।**
**सो अस्याङ्गानि प्र शृणातु सर्वा तन्मे देवा अनु जानन्तु विश्वे ॥ ५० ॥** (१७)

अपाम् । अस्मै । वज्रम् । प्र । हरामि । चतुःऽभृष्टिम् । शीर्षऽभिद्याय । विद्वान् ।
सः । अस्य । अङ्गानि । प्र । शृणातु । सर्वा । तत् । मे । देवाः । अनु । जानन्तु ।
विश्वे ॥ ५० ॥ (१७)

॥ इति तृतीयेनुवाके प्रथमं सूक्तम् ॥

खदिरकाष्ठफालविकारं मणिं शत्रुनाशाय तथा सर्वकामाप्तये बध्नाति सूक्तेनानेन ॥ सांप्रदायिका हि वक्ष्यमाणप्रकारेण विनियुञ्जन्ति ॥

सर्वकामसिद्ध्यर्थं खदिरफालमणिं त्रिवासितं कृत्वा हिरण्यवेष्टितं कृत्वा "एतमिध्मम्" [ ३५ ] इत्यृचा इध्मम् उपसमाधाय "तमिमं देवता" [२९] इति वासितम् उद्धृत्य आसाद्य "अरातीयोः" इत्यर्थसूक्तेन सपात्याभिमन्त्र्य "ब्रह्मणा तेजसा" [ ३० ] इति ऋचा बध्नाति । यस्मात् सर्वे कामाः सपद्यन्तेनेन मणिना तस्माद् अयं मणिः सर्वकामः । तथा च सूत्रम् । "आयमगन् [ ३.५ ] अयं प्रतिसरः [ ८.५ ] अयं मे वरण [ १०.३ ] अरातीयो [ १०.६ ] इति मन्त्रोक्तान् वासितान् "बध्नाति । उत्तमस्य चतुरो जातरूपशकलेनानुसूत्रं गमयित्वावभुज्य त्रैधं पर्यस्यति । एतमिध्मम् इत्युपसमाधाय तमिमं "देवता इति वासितम् उद्धृत्य ब्रह्मणा तेजसेति बध्नाति" इति [ कौ० ३ २ ] ॥ मन्त्रोक्तान् मन्त्रोक्तद्रव्यविकारान् । वासितान् त्रयोदश्यादयस्तिस्रो यास्तिथयस्तासु विधिवद् दधिमधुनि वासितान् । बन्धनस्थानं च मन्त्रस्थम् । उत्तमस्य अरातीयोरिति सूक्तस्य । अवभुज्य कुटिलां कृत्वा । त्रैधं पर्यस्यति त्रिरावेष्टयति । पार्श्वे सर्वतो वेष्टनम् आयसेन । शिरसि बन्धनकरणम् अधिरोहत्विति लिङ्गात् । इत्यादि दारिलः ॥

तथा पशौ वृश्च्यमानयूपानुमन्त्रणे इदं सूक्तं विनियुक्तम् । तद् उक्तं वैताने । "अरातीयोरिति यूपं वृश्च्यमानम् अनुमन्त्रयते" इति [ वै० २.६ ] ॥

तथा "पार्थिवीं भूमिकामस्य" इति [ न० क० १७ ] विहितायां पार्थिव्यां महाशान्तौ खदिरफालमणिबन्धनेपि एतत् सूक्तं विनियुज्यते । तद् उक्तं नक्षत्रकल्पे । "अरातीयोरिति फालं पार्थिव्याम्" इति [ न० क० १९ ] ॥

**अरातीयोर्भ्रातृव्यस्य दुर्हार्दो द्विषतः शिरः ।**
**अपि वृश्चाम्योजसा ॥ १ ॥**

अरातिऽयोः । भ्रातृव्यस्य । दुःऽहार्दः । द्विषतः । शिरः ।
अपि । वृश्चामि । ओजसा ॥ १ ॥

**वर्म मह्यमयं मणिः फालाज्जातः करिष्यति ।**
**पूर्णो मन्थेन मागमद् रसेन सह वर्चसा ॥ २ ॥**

---

१ $\overset{h}{B}$ $\overset{m}{S}$ मथेन.

वर्म । मह्यम् । अयम् । मणिः । फालात् । जातः । करिष्यति ।
पूर्णः । मन्थेन । मा । आ । अगमत् । रसेन । सह । वर्चसा ॥ २ ॥

**यत् त्वा शिक्वः परावधीत् तक्षा हस्तेन वास्या ।**
**आपस्त्वा तस्माज्जीवलाः पुनन्तु शुचयः शुचिम् ॥ ३ ॥**

यत् । त्वा । शिक्वः । पराऽअवधीत् । तक्षा । हस्तेन । वास्या ।
आपः । त्वा । तस्मात् । जीवलाः । पुनन्तु । शुचयः । शुचिम् ॥ ३ ॥

**हिरण्यस्रगयं मणिः श्रद्धां यज्ञं महो दधत् ।**
**गृहे वसतु नोतिथिः ॥ ४ ॥**

हिरण्यऽस्रक् । अयम् । मणिः । श्रद्धाम् । यज्ञम् । महः । दधत् ।
गृहे । वसतु । नः । अतिथिः ॥ ४ ॥

**तस्मै घृतं सुरां मध्वन्नमन्नं क्षदामहे ।**
**स नः पितेव पुत्रेभ्यः श्रेयःश्रेयश्चिकित्सतु भूयोभूयः श्वःश्वो देवेभ्यो मणिरेत्य ॥ ५ ॥**

तस्मै । घृतम् । सुराम् । मधु । अन्नम्ऽअन्नम् । क्षदामहे ।
सः । नः । पिताऽइव । पुत्रेभ्यः । श्रेयःऽश्रेयः । चिकित्सतु । भूयःऽभूयः । श्वःऽश्वः । देवेभ्यः । मणिः । आऽइत्य ॥ ५ ॥

**यमबध्नाद् बृहस्पतिर्मणिं फालं घृतश्चुतमुग्रं खदिरमोजसे ।**
**तमग्निः प्रत्यमुञ्चत सो अस्मै दुह आज्यं भूयोभूयः श्वःश्वस्तेन त्वं द्विषतो जहि ॥ ६ ॥**

यम् । अबध्नात् । बृहस्पतिः । मणिम् । फालम् । घृतऽश्चुतम् । उग्रम् । खदिरम् । ओजसे ।
तम् । अग्निः । प्रति । अमुञ्चत । सः । अस्मै । दुहे । आज्यम् । भूयःऽभूयः । श्वःऽश्वः ।
तेन । त्वम् । द्विषतः । जहि ॥ ६ ॥

**यमबध्नाद् बृहस्पतिर्मणिं० ।**

---

१ P फलात् ।. २ B महो. ३ A D R Dc सुरां. ४ R J P °श्च्युत°. ५ All our authorities read श्वश्वो. ६ So far P has no accents. ७ P फलम् ।. ८ P आज्याम् ।.

तमिन्द्रः प्रत्यमुञ्चतौजसे वीर्या॑य कम् ।
सो अ॑स्मै बल॒मिद् दु॑हे भूयो॑भूयः० ॥ ७ ॥

०तम् । इन्द्रः॑ । प्रति॑ । अमुञ्चत । ओज॑से । वी॒र्या॑य । कम् ।
सः । अ॒स्मै । बल॑म् । इत् । दु॒हे । भूयः॑ऽभूयः ।० ॥ ७ ॥

यमब॑०। तं सोमः प्रत्यमुञ्चत म॒हे श्रोत्रा॑य चक्ष॑से ।
सो अ॑स्मै वर्च॒ इद् दु॑हे भूयो॑भूयः० ॥ ८ ॥

०तम् । सोम॑ः । प्रति॑ । अमुञ्चत । म॒हे । श्रोत्रा॑य । चक्ष॑से ।
०अ॒स्मै । वर्च॑ः । इत् ।० ॥ ८ ॥

यमब॑०। तं सूर्यः[1] प्रत्यमुञ्चत तेने॒मा अ॑जयद् दिश॑ः ।
सो अ॑स्मै भूति॒मिद् दु॑हे भूयो॑भूयः० ॥ ९ ॥

०तम् । सूर्यः॑ । प्रति॑ । अमुञ्चत । तेन॑ । इ॒माः । अ॒जयत् । दिश॑ः ।
०अ॒स्मै । भूति॑म् । इत् ।० ॥ ९ ॥

यमब॑ध्नाद् बृह॒स्पति॑र्म॒णिं फाल॑ं घृत॒श्चुत॑मु॒ग्रं[2] ख॑दि॒रमोज॑से ।
तं बिभ्र॑च्चन्द्रमा॑ म॒णिमसु॒राणां॑ पुरो॑जयद् दान॒वानां॑ हि॒रण्ययी॑ः ।
सो अ॑स्मै श्रिय॒मिद् दु॑हे भूयो॑भूयः० ॥ १० ॥ (१८)

०बृ॒हस्पति॑ः । म॒णिम् । फाल॑म् । घृ॒तऽश्चुत॑म् । उ॒ग्रम् । ख॒दि॒रम् । ओज॑से ।
तम् । बिभ्र॑त् । चन्द्रमा॑ः । म॒णिम् । असु॑राणाम् । पुर॑ः । अ॒जयत् । दा॒न॒वाना॑म् । हि॒रण्ययी॑ः ।
०अ॒स्मै । श्रिय॑म् । इत् । दु॒हे ।० ॥ १० ॥ (१८)

यमब॑ध्नाद् बृह॒स्पति॒र्वाता॑य म॒णिमा॒शवे॑ ।
सो अ॑स्मै[3] वा॒जिनं॑[3] दुहे॒ भूयो॑भूयः० ॥ ११ ॥

०बृ॒हस्पति॑ः । वाता॑य । म॒णिम् । आ॒शवे॑ ।
सः । अ॒स्मै । वा॒जिन॑म् । दु॒हे ।० ॥ ११ ॥

यमब॑०। तेने॒मां म॒णिना॑ कृ॒षिम॒श्विना॑व॒भि र॑क्षतः ।

---

१ B S Cs सूर्यं प्र°. २ R P J Cp °श्च्युतं°. ३ A R P J अ॑स्मै वाजिनं. We with B B D K K S V Dc Cs P Cp.

स भिषग्भ्यां महो दुहे भूयोभूयः० ॥ १२ ॥

०तेन । इमाम् । मणिना । कृषिम् । अश्विनौ । अभि । रक्षतः ।
सः । भिषक्ऽभ्याम् । महः । दुहे ।० ॥ १२ ॥

यमब०। तं बिभ्रत् सविता मणिं तेनेदमजयत् स्वः[1] ।
सो अस्मै सूनृतां दुहे भूयोभूयः० ॥ १३ ॥

०तम् । बिभ्रत् । सविता । मणिम् । तेन । इदम् । अजयत् । स्वः ।
सः । अस्मै । सूनृताम् । दुहे ।० ॥ १३ ॥

यमब०। तमापो बिभ्रतीर्मणिं सदा धावन्त्यक्षिताः ।
स आभ्योमृतमिद् दुहे भूयोभूयः० ॥ १४ ॥

०तम् । आपः । बिभ्रतीः । मणिम् । सदा । धावन्ति । अक्षिताः ।
सः । आभ्यः । अमृतम् । इत् । दुहे ।० ॥ १४ ॥

यमब०। तं राजा वरुणो मणिं प्रत्यमुञ्चत शंभुवम् ।
सो अस्मै सत्यमिद् दुहे भूयोभूयः० ॥ १५ ॥

०तम् । राजा । वरुणः । मणिम् । प्रति । अमुञ्चत । शम्ऽभुवम् ।
सः । अस्मै । सत्यम् । इत् ।० ॥ १५ ॥

यमब०। तं देवा बिभ्रतो मणिं सर्वांल्लोकान् युधाजयन् ।
स एभ्यो जितिमिद् दुहे भूयोभूयः० ॥ १६ ॥

०तम् । देवाः । बिभ्रतः । मणिम् । सर्वान् । लोकान् । युधा । अजयन्[2] ।
सः । एभ्यः । जितिम्[3] । इत् ।० ॥ १६ ॥

यमबध्नाद् बृहस्पतिर्वाताय मणिमाशवे ।
तमिमं देवता मणिं प्रत्यमुञ्चन्त[4] शंभुवम् ।
स आभ्यो विश्वमिद् दुहे भूयोभूयः श्वःश्वस्तेन[5] त्वं द्विषतो जहि ॥ १७ ॥

---

१ B K^m ०जयन्त्स्वः. २ J P change this to अजयन् । . Cp अजयन् । . We with P^2. ३ P जितिम् । . We with P^2 J Cp. ४ B B^h K K^m R V Dc Cs P P^2 Cp प्रत्यमुंचत. We with A D S^m J. ५ A B B^h D K K^m R S^m V Dc Cs श्वश्वस्तेन.

यम् । अर्वध्नात् । बृहस्पतिः । वाताय । मणिम् । आशवे ।
तम् । इमम् । देवताः । मणिम् । प्रति । अमुञ्चन्त । शम्ऽभुवम् ।
सः । आभ्यः । विश्वम् । इत् । दुहे । भूयःऽभूयः । श्वःऽश्वः । तेन । त्वम् । द्विषतः । जहि ॥ १७ ॥

**ऋतवस्तमबध्नतार्तवास्तमबध्नत ।**
**संवत्सरस्तं बद्ध्वा सर्वं भूतं वि रक्षति ॥ १८ ॥**

ऋतवः । तम् । अबध्नत । आर्तवाः । तम् । अबध्नत ।
सम्ऽवत्सरः । तम् । बद्ध्वा । सर्वम् । भूतम् । वि । रक्षति ॥ १८ ॥

**अन्तर्देशा अबध्नत प्रदिशस्तमबध्नत ।**
**प्रजापतिसृष्टो मणिर्द्विषतो मेधराँ अकः ॥ १९ ॥**

अन्तःऽदेशाः । अबध्नत । प्रऽदिशः । तम् । अबध्नत ।
प्रजापतिऽसृष्टः । मणिः । द्विषतः । मे । अधरान् । अकः ॥ १९ ॥

**अथर्वाणो अबध्नताथर्वणा अबध्नत ।**
**तैर्मेदिनो अङ्गिरसो दस्यूनां बिभिदुः पुरस्तेन त्वं द्विषतो जहि ॥२०॥** (१९)

अथर्वाणः । अबध्नत । आथर्वणाः । अबध्नत ।
तैः । मेदिनः । अङ्गिरसः । दस्यूनाम् । बिभिदुः । पुरः । तेन । त्वम् । द्विषतः । जहि ॥ २० ॥ (१९)

**तं धाता प्रत्यमुञ्चत स भूतं व्यकल्पयत् ।**
**तेन त्वं द्विषतो जहि ॥ २१ ॥**

तम् । धाता । प्रति । अमुञ्चत । सः । भूतम् । वि । अकल्पयत् ।
तेन । त्वम् । द्विषतः । जहि ॥ २१ ॥

**यमबध्नाद् बृहस्पतिर्देवेभ्यो असुरक्षितिम् ।**
**स मायं मणिरागमद् रसेन सह वर्चसा ॥ २२ ॥**

यम् । अबध्नात् । बृहस्पतिः । देवेभ्यः । असुरऽक्षितिम् ।
सः । मा । अयम् । मणिः । आ । अगमत् । रसेन । सह । वर्चसा ॥ २२ ॥

---

१ P बध्ना ।. २ AR मेधरँ.

यमब॑०। स मा॒यं म॒णिराग॑मत् स॒ह गोभि॑रजावि॒भिरन्ने॑न प्र॒जया॑ स॒ह॥२३॥

०अ॒ग॒म॒त्। स॒ह। गोभिः॑। अ॒जा॒वि॒ऽभिः॑। अन्ने॑न। प्र॒ऽजया॑। स॒ह॥ २३॥

यमब॑०। स मा॒यं म॒णिराग॑मत् स॒ह व्री॑हिय॒वाभ्यां॒ मह॑सा भूत्या॑ स॒ह॥२४॥

०अ॒ग॒म॒त्। स॒ह। व्री॒हि॒ऽय॒वाभ्या॑म्। मह॑सा। भूत्या॑। स॒ह॥ २४॥

यमब॑०। स मा॒यं म॒णिराग॑मन्मधो॑र्घृ॒तस्य॒ धार॑या कीला॒ले॑न म॒णिः स॒ह॥ २५॥

०अ॒ग॒म॒त्। मधोः॑। घृ॒तस्य॑। धार॑या। की॒ला॒ले॑न। म॒णिः। स॒ह॥ २५॥

यमब॑०। स मा॒यं म॒णिराग॑मदू॒र्जया॑ पय॑सा स॒ह द्रवि॑णेन श्रि॒या स॒ह॥ २६॥

०अ॒ग॒म॒त्। ऊ॒र्जया॑। पय॑सा। स॒ह। द्रवि॑णेन। श्रि॒या। स॒ह॥ २६॥

यमब॑०। स मा॒यं म॒णिराग॑म॒त् तेज॑सा त्विष्या॑ स॒ह यश॑सा कीर्त्या॑[1] स॒ह॥२७॥

०अ॒ग॒म॒त्। तेज॑सा। त्विष्या॑। स॒ह। यश॑सा। कीर्त्या॑[1]। स॒ह॥ २७॥

यमब॑ध्नाद् बृह॒स्पति॑र्दे॒वेभ्यो॒ असु॑रक्षितिम्।
स मा॒यं म॒णिराग॑म॒त् सर्वा॑भिर्भू॒तिभिः॑ स॒ह॥ २८॥

यम्। अब॑ध्नात्। बृह॒स्पतिः॑। दे॒वेभ्यः॑। असु॑र॒ऽक्षि॒ति॒म्।
सः। मा॒। अ॒यम्। म॒णिः। आ। अ॒ग॒म॒त्। सर्वा॑भिः। भू॒ति॒ऽभिः॑। स॒ह॥ २८॥

तमि॒मं दे॒वता॑ म॒णिं मह्यं॑ ददतु॒ पुष्ट॑ये।
अ॒भि॒भुं क्ष॒त्रवर्ध॑नं सपत्न॒दम्भ॑नं म॒णिम्॥ २९॥

तम्। इ॒मम्। दे॒वताः॑। म॒णिम्। मह्य॑म्। द॒द॒तु॒। पुष्ट॑ये।
अ॒भि॒ऽभुम्। क्ष॒त्र॒ऽवर्ध॑नम्। स॒प॒त्न॒ऽदम्भ॑नम्। म॒णिम्॥ २९॥

ब्रह्म॑णा तेज॑सा स॒ह प्रति॑ मुञ्चामि मे॒ शि॒वम्।
अ॒स॒प॒त्नः स॑पत्न॒हा स॒पत्ना॑न् मेऽध॑राँ[2] अकः॥ ३०॥ (२०)

ब्रह्म॑णा। तेज॑सा। स॒ह। प्रति॑। मु॒ञ्चा॒मि॒। मे॒। शि॒वम्।
अ॒स॒प॒त्नः[3]। स॒प॒त्न॒ऽहा। स॒ऽपत्ना॑न्। मे॒। अध॑रान्। अ॒कः॥ ३०॥ (२०)

---

१ B^h K K^m S^m V Dc P^2 Cp कीर्त्या. We with A D R C^s P J २ A R ॰धराँ. ३ P अस॒-प॒त्नाः।.

उत्तरं द्विषतो मामयं मणिः[1] कृणोतु देवजाः ।
यस्य लोका इमे त्रयः पयो दुग्धमुपासते ।
स मायमधि रोहतु मणिः श्रैष्ठ्याय मूर्धतः ॥ ३१ ॥

उत्ऽतरम् । द्विषतः । माम् । अयम् । मणिः । कृणोतु । देवऽजाः ।
यस्य । लोकाः[2] । इमे । त्रयः । पयः । दुग्धम् । उपऽआसते ।
सः । मा । अयम् । अधि । रोहतु । मणिः । श्रैष्ठ्याय । मूर्धतः ॥ ३१ ॥

यं देवाः पितरो मनुष्या उपजीवन्ति सर्वदा ।
स मायमधि रोहतु मणिः श्रैष्ठ्याय मूर्धतः ॥ ३२ ॥

यम् । देवाः । पितरः । मनुष्याः । उपऽजीवन्ति । सर्वदा ।
सः । मा । अयम् । अधि । रोहतु । मणिः । श्रैष्ठ्याय । मूर्धतः ॥ ३२ ॥

यथा बीजमुर्वरायां कृष्टे फालेन रोहति ।
एवा मयि प्रजा पशवोन्नमन्नं वि रोहतु ॥ ३३ ॥

यथा । बीजम् । उर्वरायाम् । कृष्टे । फालेन । रोहति ।
एव । मयि । प्रऽजा । पशवः । अन्नम्ऽअन्नम् । वि । रोहतु ॥ ३३ ॥

यस्मै त्वा यज्ञवर्धन मणे प्रत्यमुचं[3] शिवम् ।
तं त्वं शतदक्षिण मणे श्रैष्ठ्याय जिन्वतात् ॥ ३४ ॥

यस्मै । त्वा । यज्ञऽवर्धन । मणे । प्रतिऽअमुचम्[3] । शिवम् ।
तम् । त्वम् । शतऽदक्षिण । मणे । श्रैष्ठ्याय जिन्वतात् ॥ ३४ ॥

एतमिध्मं समाहितं जुषाणो अग्ने[4] प्रति हर्य होमैः ।
तस्मिन् विदेम सुमतिं स्वस्ति प्रजां चक्षुः पशून्त्समिद्धे जातवेदसि
ब्रह्मणा ॥ ३५ ॥ (२१)

एतम् । इध्मम् । सम्ऽआहितम् । जुषाणः । अग्ने[4] । प्रति । हर्य । होमैः ।

---

१ B^h S^m Cs मणिष्कृ°. २ P लोकः ।. ३ K K^m V Dc Cs P J Cp प्रत्यमुंचं. We with A B^h D R S^m P^2. ४ So we with A D R S^m K^m Cs P J Cp. B^h K Dc अग्ने. P^2 अग्ने ।.

तस्मिन् । विदेम । सुऽमतिम् । स्वस्ति । प्रऽजाम् । चक्षुः । पशून् । सम्ऽइद्धे । जातऽवेदसि । ब्रह्मणा ॥ ३५ ॥ (२१)

तृतीयेनुवाके द्वितीयं सूक्तम् ॥

इति तृतीयोनुवाकः ॥

"कस्मिन्नङ्गे" इति स्कम्भसूक्तम् । स्कम्भ इति सनातनतमो देवो ब्रह्मणोप्याद्यभूतः । अतो ज्येष्ठ ब्रह्मेति तस्य संज्ञा । तस्मिन् सर्वमेतत् तिष्ठति तत्सर्वम् एतेनाविष्टम् । विराडपि तस्मिन्नेव समाहितः । तस्मिन्नेव देवादय. सर्वे समाहिता इत्यादि वर्णनम ॥

**कस्मिन्नङ्गे तपो अस्याधि तिष्ठति कस्मिन्नङ्ग ऋतमस्याध्याहितम् ।**
**क्व व्रतं क्व श्रद्धास्य तिष्ठति कस्मिन्नङ्गे सत्यमस्य प्रतिष्ठितम् ॥ १ ॥**

कस्मिन् । अङ्गे । तपः । अस्य । अधि । तिष्ठति । कस्मिन् । अङ्गे । ऋतम् । अस्य । अधि । आऽहितम् ।
क्व । व्रतम् । क्व । श्रद्धा । अस्य । तिष्ठति । कस्मिन् । अङ्गे । सत्यम् । अस्य । प्रतिऽस्थितम् ॥ १ ॥

**कस्मादङ्गाद् दीप्यते अग्निरस्य कस्मादङ्गात् पवते मातरिश्वा ।**
**कस्मादङ्गाद् वि मिमीतेधि चन्द्रमा मह स्कम्भस्य मिमानो अङ्गम् ॥२॥**

कस्मात् । अङ्गात् । दीप्यते । अग्निः । अस्य । कस्मात् । अङ्गात् । पवते । मातरिश्वा ।
कस्मात् । अङ्गात् । वि । मिमीते । अधि । चन्द्रमाः । महः । स्कम्भस्य । मिमानः । अङ्गम् ॥ २ ॥

**कस्मिन्नङ्गे तिष्ठति भूमिरस्य कस्मिन्नङ्गे तिष्ठत्यन्तरिक्षम् ।**
**कस्मिन्नङ्गे तिष्ठत्याहिता द्यौः कस्मिन्नङ्गे तिष्ठत्युत्तरं दिवः ॥ ३ ॥**

कस्मिन् । अङ्गे । तिष्ठति । भूमिः । अस्य । कस्मिन् । अङ्गे । तिष्ठति । अन्तरिक्षम् ।
कस्मिन् । अङ्गे । तिष्ठति । आऽहिता । द्यौः । कस्मिन् । अङ्गे । तिष्ठति । उत्ऽतरम् । दिवः ॥ ३ ॥

**क्व[1] प्रेप्सन् दीप्यत ऊर्ध्वो अग्निः क्व[2] प्रेप्सन् पवते मातरिश्वा ।**
**यत्र प्रेप्सन्तीरभियन्त्यावृतः स्कम्भं तं ब्रूहि कतमः स्विदेव[3] सः ॥ ४ ॥**

---

१ A R क्व३प्रे°. २ A B^h R S^m Cs क्व३प्रे°. ३ A B B^h K R S^m P P^2 J Cp स्विदेव. We with D K^m V Dc Cs.

कः । प्रऽईप्सन् । दीप्यते । ऊर्ध्वः । अग्निः । कः । प्रऽईप्सन् । पवते । मातरिश्वा ।
यत्र । प्रऽईप्सन्तीः । अभिऽयन्ति । आऽवृतः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ ४ ॥

**क्वार्धमासाः क्व यन्ति मासाः संवत्सरेण सह संविदानाः ।**
**यत्र यन्त्यृतवो यत्रार्तवाः[2] स्कम्भं तं० ॥ ५ ॥**

क्व । अर्धऽमासाः । क्व । यन्ति । मासाः । सम्ऽवत्सरेण । सह । सम्ऽविदानाः ।
यत्र । यन्ति । ऋतवः । यत्र । आर्तवाः । स्कम्भम् ।० ॥ ५ ॥

**क्व१[3] प्रेप्सन्ती युवती विरूपे अहोरात्रे द्रवतः संविदाने ।**
**यत्र प्रेप्सन्तीरभियन्त्यापः[4] स्कम्भं तं० ॥ ६ ॥**

क्व । प्रेप्सन्ती इति प्रऽईप्सन्ती । युवती इति । विरूपे इति विऽरूपे । अहोरात्रे इति ।
द्रवतः । संविदाने इति सम्ऽविदाने ।
यत्र । प्रऽईप्सन्तीः । अभिऽयन्ति । आपः । स्कम्भम् ।० ॥ ६ ॥

**यस्मिन्स्तब्ध्वा[6] प्रजापतिर्लोकान्त्सर्वाँ[7] अधारयत् ।**
**स्कम्भं तं ब्रूहि कतमः स्विदेव[9] सः ॥ ७ ॥**

यस्मिन् । स्तब्ध्वा । प्रजाऽपतिः । लोकान् । सर्वान् । अधारयत् ।
स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ ७ ॥

**यत् परममवमं[10] यच्च मध्यमं प्रजापतिः ससृजे विश्वरूपम् ।**
**कियता स्कम्भः प्र विवेश तत्र यन्न प्राविशत् कियत् तद् बभूव ॥ ८ ॥**

यत् । परमम् । अवमम् । यत् । च । मध्यमम् । प्रजाऽपतिः । ससृजे । विश्वऽरूपम् ।
कियता । स्कम्भः । प्र । विवेश । तत्र । यत् । न । प्रऽअविशत् । कियत् । तत् । बभूव ॥८॥

**कियता स्कम्भः प्र विवेश भूतं कियद् भविष्यदन्वाशयेस्य ।**

---

१ See note ३, on preceding page. २ B^h D S^m Cs °वा स्कं°. We with A K K^m R V Dc ३ A P^h R S^m Cs ३ for १. We with D K K^m V Dc. ४ A B B^h D K K^m R V Dc Cs all read °पः स्कं°. ५ P^2 J प्रऽईप्स°. ६ A B^h D K K^m R S^m V Dc Cs P P^2 J Cp all have °ब्धा. ७ A R लोकान्त्सर्वँ. ८ K K^m अधारयन्. ९ A B B^h K K^m R S^m P J Cp स्विदेव. We with D V Dc Cs P^2. १० K V °मं यदवमं. We with A B^h D K^m R S^m Dc Cs P P^2 J Cp.

एकं यदङ्गमकृणोत् सहस्रधा कियंता स्कम्भः प्र विवेश तत्र ॥ ९ ॥

कियंता । स्कम्भः । प्र । विवेश । भूतम् । कियंत् । भविष्यत् । अनुऽआशये । अस्य ।
एकम् । यत् । अङ्गम् । अकृणोत् । सहस्रऽधा । कियंता । स्कम्भः । प्र । विवेश । तत्र ॥ ९ ॥

यत्र लोकांश्च कोशांश्चापो ब्रह्म जना विदुः ।
असंच्च यत्र सच्चान्तः स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ १० ॥ (२२)

यत्र । लोकान् । च । कोशान् । च । आपः । ब्रह्म । जनाः । विदुः ।
असंत् । च । यत्र । सत् । च । अन्तः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् ।
एव । सः ॥ १० ॥ (२२)

यत्र तपः पराक्रम्य व्रतं धारयत्युत्तरम् ।
ऋतं च यत्र श्रद्धा चापो ब्रह्म समाहिताः स्कम्भं तं॰ ॥ ११ ॥

यत्र । तपः । पराऽक्रम्य । व्रतम् । धारयति । उत्ऽतरम् ।
ऋतम् । च । यत्र । श्रद्धा । च । आपः । ब्रह्म । सम्ऽआहिताः । स्कम्भम् ।॰ ॥ ११ ॥

यस्मिन् भूमिरन्तरिक्षं द्यौर्यस्मिन्नध्याहिता ।
यत्राग्निश्चन्द्रमाः सूर्यो वातस्तिष्ठन्त्यार्पिताः स्कम्भं तं॰ ॥ १२ ॥

यस्मिन् । भूमिः । अन्तरिक्षम् । द्यौः । यस्मिन् । अधि । आऽहिता ।
यत्र । अग्निः । चन्द्रमाः । सूर्यः । वातः । तिष्ठन्ति । आर्पिताः । स्कम्भम् ।॰ ॥ १२ ॥

यस्य त्रयस्त्रिंशद् देवा अङ्गे सर्वे समाहिताः ।
स्कम्भं तं॰ ॥ १३ ॥

यस्य । त्रयःऽत्रिंशत् । देवाः । अङ्गे । सर्वे । सम्ऽआहिताः ।
स्कम्भम् । तम् ।॰ ॥ १३ ॥

यत्र ऋषयः प्रथमजा ऋचः साम यजुर्मही ।
एकर्षिर्यस्मिन्नार्पितः स्कम्भं तं॰ ॥ १४ ॥

---

१ K तद्॰. २ K K̄[m] R Dc ॰न्तः स्कं॰. We with A B̄[h] D S̄[m] V Cs. ३ A K R S̄[m] P J Cp स्विद्देव. We with B̄[h] K̄[m] V Dc Cs P̄[2]. ४ V ॰ता स्कंभं. We with A B̄[h] K K̄[m] R S̄[m] Dc Cs. ५ D R Cs P P̄[2] J ॰हिताः. We with Dc S̄[m] Cp. ६ D K S̄[m] V ॰र्पित स्कं॰. We with A B̄[h] K R Dc Cs.

यत्र॑ । ऋष॑यः । प्र॒थम॒ऽजाः । ऋचः॑ । साम॑ । यजुः॑ । म॒ही ।
ए॒क॒ऽऋ॒षिः । यस्मि॑न् । आर्पि॑तः । स्क॒म्भम् ।० ॥ १४ ॥

यत्रा॒मृतं॑ च मृ॒त्युश्च॒ पुरु॒षेऽधि॑ स॒माहि॑ते ।
स॒मु॒द्रो यस्य॑ ना॒ड्य१ः॒ पुरु॒षेऽधि॑ स॒माहि॑ताः स्क॒म्भं तं० ॥ १५ ॥

यत्र॑ । अ॒मृत॑म् । च॒ । मृ॒त्युः । च॒ । पुरु॑षे । अधि॑ । स॒माहि॑ते॒ इति॑ स॒म्ऽआहि॑ते ।
स॒मु॒द्रः । यस्य॑ । ना॒ड्यः॑ । पुरु॑षे । अधि॑ । स॒म्ऽआहि॑ताः । स्क॒म्भम् ।० ॥ १५ ॥

यस्य॒ चत॑स्रः प्र॒दिशो॑ ना॒ड्य१स्तिष्ठ॑न्ति प्रथ॒माः ।
य॒ज्ञो यत्र॒ परा॑क्रान्तः स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व सः ॥ १६ ॥

यस्य॑ । चत॑स्रः । प्र॒ऽदिशः॑ । ना॒ड्यः॑ । तिष्ठ॑न्ति । प्र॒थ॒माः ।
य॒ज्ञः । यत्र॑ । परा॑ऽक्रान्तः । स्क॒म्भम् । तम् । ब्रू॒हि॒ । क॒त॒मः । स्वि॒त् । ए॒व । सः ॥ १६ ॥

ये पुरु॑षे॒ ब्रह्म॑ वि॒दुस्ते वि॑दुः परमे॒ष्ठिन॑म् ।
यो वेद॑ परमे॒ष्ठिनं॒ यश्च॒ वेद॑ प्र॒जाप॑तिम् ।
ज्ये॒ष्ठं ये ब्राह्म॑णं वि॒दुस्ते स्क॒म्भम॑नु॒संवि॑दुः ॥ १७ ॥

ये । पुरु॑षे । ब्रह्म॑ । वि॒दुः । ते । वि॒दुः॒ । प॒र॒मे॒ऽस्थिन॑म् ।
यः । वेद॑ । प॒र॒मे॒ऽस्थिन॑म् । यः । च॒ । वेद॑ । प्र॒जाऽप॑तिम् ।
ज्ये॒ष्ठम् । ये । ब्राह्म॑णम् । वि॒दुः । ते । स्क॒म्भम् । अ॒नु॒ऽसंवि॑दुः ॥ १७ ॥

यस्य॒ शिरो॑ वैश्वान॒रश्चक्षु॒रङ्गि॑र॒सोऽभ॑वन् ।
अङ्गा॑नि॒ यस्य॑ या॒तवः॑ स्क॒म्भं तं ब्रू॑हि कत॒मः स्वि॑दे॒व सः ॥ १८ ॥

यस्य॑ । शिरः॑ । वै॒श्वा॒न॒रः । चक्षुः॑ । अङ्गि॑रसः । अभ॑वन् ।
अङ्गा॑नि । यस्य॑ । या॒तवः॑ । स्क॒म्भम् । तम् । ब्रू॒हि॒ । क॒त॒मः । स्वि॒त् । ए॒व । सः ॥ १८ ॥

---

१ B[h] D S[m] Cs ३ for १. We with K V Dc. २ D S[m] V स॒माहि॑ता स्क॑°. We with A B K K[m] R Dc Cs. ३ A B B[h] D K K[m] R S[m] V Dc Cs all have प्रप्यसाः for प्रथमाः. P P[2] J Cp प्रऽप्यसाः ।. ४ D S[m] V परा॑क्रांत स्कं॑भं. We with A B[h] K K[m] R Dc Cs. ५ B D S[m] R स्विदे॒व. We with A V Dc. ६ P P[2] J स्वित् ।. Cp afterwards changed to स्वित् ।. ७ A D K K[m] R S[m] V या॒तवं स्कं॑°. We with B B[h] Dc Cs. ८ A B R S[m] स्विदे॒व. We with V Dc. ९ P P[2] J स्वित् ।. Cp changes स्वि॒त् to स्वित्.

यस्य ब्रह्म मुखमाहुर्जिह्वां मधुकशामुत ।
विराजमूधो यस्याहु:[1] स्कम्भं तं० ॥ १९ ॥

यस्य । ब्रह्म । मुखम् । आहुः । जिह्वाम् । मधुऽकशाम् । उत ।
विऽराजम् । ऊधः । यस्य । आहुः । स्कम्भम् ।० ॥ १९ ॥

यस्मादृचो अपातक्षन् यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमान्यथर्वाङ्गिरसो मुखं स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ २० ॥ (२३)

यस्मात् । ऋचः । अपऽअतक्षन् । यजुः । यस्मात् । अपऽअकषन् ।
सामानि । यस्य । लोमानि । अथर्वऽअङ्गिरसः । मुखम् । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित्[2] । एव । सः ॥ २० ॥ (२३)

असच्छाखां प्रतिष्ठन्तीं परममिव जना विदुः[3] ।
उतो सन्मन्य[4]न्तेवरे ये ते शाखामुपासते ॥ २१ ॥

असत्ऽशाखाम् । प्रऽतिष्ठन्तीम् । परमम्ऽइव । जनाः । विदुः[3] ।
उतो इति । सत् । मन्यन्ते । अवरे । ये । ते । शाखाम् । उपऽआसते ॥ २१ ॥

यत्रादित्याश्च रुद्राश्च वसवश्च समाहिताः ।
भूतं च यत्र भव्यं च सर्वे लोकाः प्रतिष्ठिता:[5] स्कम्भं तं ब्रूहि कतमः स्वि[6]देव सः ॥ २२ ॥

यत्र । आदित्याः । च । रुद्राः । च । वसवः । च । सम्ऽआहिताः ।
भूतम् । च । यत्र । भव्यम् । च । सर्वे । लोकाः । प्रतिऽस्थिताः । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित्[7] । एव । सः ॥ २२ ॥

यस्य त्रयस्त्रिंशद् देवा निधिं रक्षन्ति सर्वदा ।
निधिं तमद्य को वेद यं देवा अभिरक्षथ ॥ २३ ॥

१ D S̈ᵐ V °हु स्कं°. We with A B B̈ʰ K̈ᵐ R Dc Cs. २ B R S̈ᵐ V P J स्विद्देव. ३ K K̈ᵐ R S̈ᵐ V P विदुः. ४ K K̈ᵐ °मन्यते°. ५ B̈ʰ D S̈ᵐ V Cs °ष्ठिता स्क°. We with A B̈ʰ K K̈ᵐ R Dc. ६ B R S̈ᵐ स्विद्देव. ७ P P̈² J स्वित् ।. Cp स्वित् । changed to स्वित् ।.

यस्य । त्रयःऽत्रिंशत् । देवाः । निऽधिम् । रक्षन्ति । सर्वदा ।
निऽधिम् । तम् । अद्य । कः । वेद । यम् । देवाः । अभिऽरक्षथ ॥ २३ ॥

**यत्र देवा ब्रह्मविदो ब्रह्म ज्येष्ठमुपासते ।**
**यो वै तान् विद्यात् प्रत्यक्षं स ब्रह्मा वेदिता स्यात् ॥ २४ ॥**

यत्र । देवाः । ब्रह्मऽविदः । ब्रह्म । ज्येष्ठम् । उपऽआसते ।
यः । वै । तान् । विद्यात् । प्रतिऽअक्षम् । सः । ब्रह्मा । वेदिता । स्यात् ॥ २४ ॥

**बृहन्तो नाम ते देवा येसतः परि जज्ञिरे ।**
**एकं तदङ्गं स्कम्भस्यासदाहुः परो जनाः ॥ २५ ॥**

बृहन्तः । नाम । ते[1] । देवाः । ये । असतः । परि । जज्ञिरे ।
एकम् । तत् । अङ्गम् । स्कम्भस्य । असत् । आहुः । परः । जनाः ॥ २५ ॥

**यत्र स्कम्भः प्रजनयन् पुराणं व्यवर्तयत्[2] ।**
**एकं तदङ्गं स्कम्भस्य पुराणमनुसंविदुः ॥ २६ ॥**

यत्र । स्कम्भः । प्रऽजनयन् । पुराणम् । विऽअवर्तयत् ।
एकम् । तत् । अङ्गम् । स्कम्भस्य । पुराणम् । अनुऽसंविदुः ॥ २६ ॥

**यस्य त्रयस्त्रिंशद् देवा अङ्गे गात्रा विभेजिरे ।**
**तान् वै त्रयस्त्रिंशद्देवानेके ब्रह्मविदो विदुः ॥ २७ ॥**

यस्य । त्रयःऽत्रिंशत् । देवाः । अङ्गे । गात्रा । विऽभेजिरे ।
तान् । वै । त्रयःऽत्रिंशत् । देवान् । एके । ब्रह्मऽविदः । विदुः[3] ॥ २७ ॥

**हिरण्यगर्भं परममनत्युद्यं[3] जना विदुः ।**
**स्कम्भस्तदग्रे प्रासिञ्चद्धिरण्यं लोके अन्तरा ॥ २८ ॥**

हिरण्यऽगर्भम् । परमम् । अनतिऽउद्यम्[4] । जनाः । विदुः ।
स्कम्भः । तत् । अग्रे । प्र । असिञ्चत् । हिरण्यम् । लोके । अन्तरा ॥ २८ ॥

**स्कम्भे लोकाः[5] स्कम्भे तपः[6] स्कम्भेध्यृतमाहितम् ।**

१ P Cp ते ।. २ B K व्यवर्तयत्. ३ R S P विदुः. ४ P J °उद्यन् ।. We with P Cp.
५ B D S V Cs लोका स्कं°. We with A K K R Dc. ६ B D S V Cs तप स्कं°. We with A K R Dc.

स्कम्भे त्वा वेद प्रत्यक्षमिन्द्रे सर्वं समाहितम् ॥ २९ ॥

स्कम्भे । लोकाः । स्कम्भे । तपः । स्कम्भे । अधि । ऋतम् । आऽहितम् ।

स्कम्भं । त्वा । वेद । प्रतिऽअक्षम् । इन्द्रे । सर्वम् । सम्ऽआहितम् ॥ २९ ॥

इन्द्रे लोका इन्द्रे तप इन्द्रेध्यृतमाहितम् ।

इन्द्रं त्वा वेद प्रत्यक्षं स्कम्भे सर्वं प्रतिष्ठितम् ॥ ३० ॥ (२४)

इन्द्रे । लोकाः । इन्द्रे । तपः । इन्द्रे । अधि । ऋतम् । आऽहितम् ।

इन्द्रम् । त्वा । वेद । प्रतिऽअक्षम् । स्कम्भे । सर्वम् । प्रतिऽस्थितम् ॥ ३० ॥ (२४)

नाम नाम्ना जोहवीति पुरा सूर्यात् पुरोषसः ।

यदजः प्रथमं संबभूव स ह तत् स्वराज्यमियाय यस्मान्नान्यत् परमस्ति भूतम् ॥ ३१ ॥

नाम । नाम्ना । जोहवीति । पुरा । सूर्यात् । पुरा । उषसः ।

यत् । अजः । प्रथमम् । सम्ऽबभूव । सः । ह । तत् । स्वऽराज्यम् । इयाय । यस्मात् । न । अन्यत् । परम् । अस्ति । भूतम् ॥ ३१ ॥

यस्य भूमिः प्रमान्तरिक्षमुतोदरम् ।

दिवं यश्चक्रे मूर्धानं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३२ ॥

यस्य । भूमिः । प्रऽमा । अन्तरिक्षम् । उत । उदरम् ।

दिवम् । यः । चक्रे । मूर्धानम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३२ ॥

यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः ।

अग्निं यश्चक्र आस्यं१ तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३३ ॥

यस्य । सूर्यः । चक्षुः । चन्द्रमाः । च । पुनःऽनवः ।

अग्निम् । यः । चक्रे । आस्यम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ ३३ ॥

यस्य वातः प्राणापानौ चक्षुरङ्गिरसोभवन् ।

दिशो यश्चक्रे प्रज्ञानीस्तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ ३४ ॥

---

१ A B B[h] D K K[m] R S[m] C[s] स्कंभं. P स्कंभम् । changed to स्कंभंम् ।. P[2] स्कंभम ।. J C[p] स्कंभंम् ।. V D[c] स्कंभं. २ K नाम्नां.

यस्य॑ । वातः॑ । प्राणापानौ । चक्षुः॑ । अङ्गि॑रसः । अभ॑वन् ।

दिश॑ः । यः । चक्रे । प्रऽज्ञानीः॑ । तस्मै॑ । ज्येष्ठाय॑ । ब्रह्म॑णे । नमः॑ ॥ ३४ ॥

**स्क॒म्भो दा॑धार॒ द्यावा॑पृथि॒वी उ॒भे इ॒मे स्क॒म्भो दा॑धारो॒र्व[1]॑न्तरि॑क्षम् ।**

**स्क॒म्भो दा॑धार प्र॒दिश॒ः षडु॒र्वीः[2] स्क॒म्भ इ॒दं विश्वं॒ भुव॑न॒मा वि॑वेश॥३५॥**

स्क॒म्भः । दा॒धा॒र॒ । द्यावा॑पृथि॒वी इति॑ । उ॒भे इति॑ । इ॒मे इति॑ । स्क॒म्भः । दा॒धा॒र॒ । उ॒रु ।

अ॒न्तरि॑क्षम् ।

स्क॒म्भः । दा॒धा॒र॒ । प्र॒ऽदिशः॑ । षट् । उ॒र्वीः । स्क॒म्भे । इ॒दम् । विश्व॑म् । भुव॑नम् । आ ।

वि॒वे॒श॒ ॥ ३५ ॥

**यः श्रमा॒त् तप॑सो जा॒तो लो॒कान्त्सर्वा॑न्त्समान॒शे ।**

**सोमं॒ यश्च॒क्रे केव॑लं॒ तस्मै॑ ज्येष्ठाय॒ ब्रह्म॑णे॒ नमः॑ ॥ ३६ ॥**

यः । श्र॒मात् । तप॑सः । जा॒तः । लो॒कान् । सर्वा॑न् । स॒म्ऽआ॒न॒शे ।

सोम॑म् । यः । च॒क्रे । केव॑लम् । तस्मै॑ । ज्येष्ठाय॑ । ब्रह्म॑णे । नम॑ः ॥ ३६ ॥

**क॒थं वातो॒ नेल॑यति क॒थं न र॑मते॒ मन॑ः ।**

**किमाप॑ः स॒त्यं प्रेप्स॑न्ती॒र्नेल॑यन्ति क॒दा च॒न ॥ ३७ ॥**

क॒थम् । वात॑ः । न । ई॒ल॒य॒ति[3] । क॒थम् । न । र॒म॒ते॒ । मन॑ः ।

किम् । आप॑ः । स॒त्यम् । प्र॒ऽई॒प्स॑न्तीः । न । ई॒ल॒य॒न्ति[4] । क॒दा । च॒न ॥ ३७ ॥

**म॒हद् य॒क्षं भुव॑नस्य॒ मध्ये॒ तप॑सि क्रा॒न्तं स॑लि॒लस्य॑ पृ॒ष्ठे[5] ।**

**तस्मि॑न्[6] छ्रयन्ते॒ य उ॒ के च॑ दे॒वा वृ॒क्षस्य॒ स्कन्ध॑ः परि॑त[7] इ॒व शाखा॑ः ॥३८॥**

म॒हत् । य॒क्षम् । भुव॑नस्य । मध्ये॑ । तप॑सि । क्रा॒न्तम् । स॒लि॒लस्य॑ । पृ॒ष्ठे ।

तस्मि॑न् । श्र॒य॒न्ते॒ । ये । ऊं इति॑ । के । च॒ । दे॒वाः । वृ॒क्षस्य॑ । स्कन्ध॑ः । परि॑तःऽइव ।

शाखा॑ः ॥ ३८ ॥

---

१ B $\overset{h}{B}$ D $\overset{m}{S}$ Cs ३ for १. We with K $\overset{m}{K}$ V Dc. २ $\overset{h}{B}$ D $\overset{m}{S}$ V Cs षडु॒र्वी स्कं॰. We with A B K $\overset{m}{K}$ R Dc. ३ P J ई॒ल॒य॒ति॒ ।. We with $\overset{2}{P}$ Cp. ४ So P $\overset{2}{P}$ J Cp. ५ A $\overset{h}{B}$ R $\overset{m}{S}$ Cs $\overset{2}{P}$ पृ॒ष्ठे. ६ A $\overset{m}{K}$ R Dc तस्मिं॑छ्र॰. We with $\overset{h}{B}$ D K $\overset{m}{S}$ Cs. ७ D $\overset{m}{S}$ पलि॑त.

यस्मै हस्ताभ्यां पादाभ्यां वाचा श्रोत्रेण चक्षुषा ।
यस्मै देवाः सदा बलिं प्रयच्छन्ति विमितेमितं स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ ३९ ॥

यस्मै । हस्ताभ्याम् । पादाभ्याम् । वाचा । श्रोत्रेण । चक्षुषा ।
यस्मै । देवाः । सदा । बलिम् । प्रऽयच्छन्ति । विऽमिते । अमितम् । स्कम्भम् । तम् । ब्रूहि । कतमः । स्वित् । एव । सः ॥ ३९ ॥

अप तस्य हतं तमो व्यावृत्तः स पाप्मना ।
सर्वाणि तस्मिन् ज्योतींषि यानि त्रीणि प्रजापतौ ॥ ४० ॥

अप । तस्य । हतम् । तमः । विऽआवृत्तः । सः । पाप्मना ।
सर्वाणि । तस्मिन् । ज्योतींषि । यानि । त्रीणि । प्रजाऽपतौ ॥ ४० ॥

यो वेतसं हिरण्ययं तिष्ठन्तं सलिले वेद ।
स वै गुह्यः प्रजापतिः ॥ ४१ ॥

यः । वेतसम् । हिरण्ययम् । तिष्ठन्तम् । सलिले । वेद ।
सः । वै । गुह्यः । प्रजाऽपतिः ॥ ४१ ॥

तन्त्रमेके युवती विरूपे अभ्याक्रामं वयतः षण्मयूखम् ।
प्रान्या तन्तूंस्तिरते धत्ते अन्या नाप वृञ्जाते न गमातो अन्तम् ॥ ४२ ॥

तन्त्रम् । एके इति । युवती इति । विरूपे इति विऽरूपे । अभिऽआक्रामम् । वयतः । षट्ऽमयूखम् ।
प्र । अन्या । तन्तून् । तिरते । धत्ते । अन्या । न । अप । वृञ्जाते इति । न । गमातः । अन्तम् ॥ ४२ ॥

तयोरहं परिनृत्यन्त्योरिव न वि जानामि यतरा परस्तात् ।

---

१ A B K R $\overset{m}{S}$ P $\overset{2}{P}$ J स्विदेव. We with $\overset{h}{B}$ D $\overset{m}{K}$ V $D_c$ $C_s$ $C_P$. २ $\overset{h}{B}$ D K $\overset{m}{K}$ R C- -वृतः. We with $\overset{m}{S}$ V $D_c$ P $\overset{2}{P}$ J $C_P$. ३ A B $\overset{h}{B}$ D K $\overset{m}{K}$ R $\overset{m}{S}$ V $D_c$ $C_s$ गुह्यं प्रजापतिः. P $\overset{2}{P}$ J गुह्य।. We with $C_P$ ४ A $\overset{h}{B}$ D $\overset{m}{S}$ V $D_c$ $C_s$ $C_P$ °मयूपम्. We with K $\overset{m}{K}$ R P $\overset{2}{P}$ J ५ D C- प्राज्ञा. J प्र। अज्ञा।.

पुमानेनद् वयत्युद्गृणत्ति पुमानेनद् वि जभाराधि नाके ॥ ४३ ॥

तयोः । अहम् । परिनृत्यन्त्योःऽइव । न । वि । जानामि । यतरा । परस्तात् ।

पुमान् । एनत् । वयति । उत् । गृणत्ति । पुमान् । एनत् । वि । जभार । अधि । नाके ॥ ४३ ॥

इमे मयूखा उप तस्तभुर्दिवं सामानि चक्रुस्तसराणि वातवे ॥ ४४ ॥(२५)

इमे । मयूखाः । उप । तस्तभुः । दिवम् । सामानि । चक्रुः । तसराणि । वातवे ॥४४॥ (२५)

इति चतुर्थेनुवाके प्रथमं सूक्तम् ॥

"यो भूतम्" इति सूक्तमपि स्कम्भदेवताकम् ॥ अत्रापि स्कम्भस्य ज्येष्ठत्व श्रेष्ठत्व सर्वेषामाश्रयभूतत्व च दृश्यते ॥

यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति ।

स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ १ ॥

यः । भूतम् । च । भव्यम् । च । सर्वम् । यः । च । अधिऽतिष्ठति ।

स्वः । यस्य । च । केवलम् । तस्मै । ज्येष्ठाय । ब्रह्मणे । नमः ॥ १ ॥

स्कम्भेनेमे विष्टभिते द्यौश्च भूमिश्च तिष्ठतः ।

स्कम्भ इदं सर्वमात्मन्वद् यत् प्राणन्निमिषच्च यत् ॥ २ ॥

स्कम्भेन । इमे इति । विस्तभिते इति विऽस्तभिते । द्यौः । च । भूमिः । च । तिष्ठतः ।

स्कम्भे । इदम् । सर्वम् । आत्मन्ऽवत् । यत् । प्राणत् । निऽमिषत् । च । यत् ॥ २ ॥

तिस्रो ह प्रजा अत्यायमायन् न्यन्या अर्कमभितोविशन्त ।

बृहन् ह तस्थौ रजसो विमानो हरितो हरिणीरा विवेश ॥ ३ ॥

तिस्रः । ह । प्रऽजाः । अतिऽआयम् । आयन् । नि । अन्याः । अर्कम् । अभितः । अविशन्त ।

बृहन् । ह । तस्थौ । रजसः । विऽमानः । हरितः । हरिणीः । आ । विवेश ॥ ३ ॥

द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत ।

तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये ॥ ४ ॥

---

१ Ś̈ °नद्वय°. २ K गृह्णन्ति. ३ R Ś̈ Cs Cp मयूषा. ४ P तस्थभुः ।. ५ P P̈ चक्रुः ।. We with J Cp. ६ B corrects १ into ३. B̈ D Ś̈ Cs ३. We with K V Dc. ७ K °मिषयच्च (sic). ८ B B̈ D Ś̈ Cs ३ for १. We with K K̈ V Dc. ९ A B̈ K Ś̈ Dc C P P̈ षष्टिश्च.

द्वादश। प्रऽधर्यः। चक्रम्। एकम्। त्रीणि। नभ्यानि। कः। ऊं इति। तत्। चिकेत। तत्रे। आऽहताः। त्रीणि। शतानि। शङ्कवः। षष्टिः। च। खीलाः। अविऽचाचलाः। ये॥ ४॥

इदं सवितर्वि जानीहि षड् यमा एक एकजः।
तस्मिन् हापित्वमिच्छन्ते य एषामेक एकजः॥ ५॥

इदम्। सवितः। वि। जानीहि। षट्। यमाः। एकः। एकऽजः[1]।
तस्मिन्। ह। अपिऽत्वम्। इच्छन्ते। यः। एषाम्। एकः। एकऽजः॥ ५॥

आविः सन्निहितं गुहा जरन्नाम महत् पदम्।
तत्रेदं सर्वमार्पितमेजत् प्राणत् प्रतिष्ठितम्॥ ६॥

आविः। सत्। निऽहितम्। गुहा। जरत्। नाम। महत्। पदम्।
तत्र। इदम्। सर्वम्। आर्पितम्। एजत्। प्राणत्। प्रतिऽस्थितम्॥ ६॥

एकचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं क्व[2] तद् बभूव॥ ७॥

एकऽचक्रम्। वर्तते। एकऽनेमि। सहस्रऽअक्षरम्। प्र। पुरः। नि। पश्चा।
अर्धेन। विश्वम्। भुवनम्। जजान। यत्। अस्य। अर्धम्। क्व। तत्। बभूव॥ ७॥

पञ्चवाही वहत्यग्रमेषां प्रष्टयो[3] युक्ता अनुसंवहन्ति[4]।
अयातमस्य ददृशे न यातं परं नेदीयोवरं दवीयः॥ ८॥

पञ्चऽवाही। वहति। अग्रम्। एषाम्। प्रष्टयः[3]। युक्ताः। अनुऽसंवहन्ति।
अयातम्। अस्य। ददृशे। न। यातम्। परम्। नेदीयः। अवरम्। दवीयः॥ ८॥

तिर्यग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्।
तदासत ऋषयः सप्त साकं ये अस्य[5] गोपा महतो बभूवुः॥ ९॥

तिर्यक्ऽबिलः। चमसः। ऊर्ध्वऽबुध्नः। तस्मिन्। यशः। निऽहितम्। विश्वऽरूपम्।
तत्। आसते। ऋषयः। सप्त। साकम्। ये। अस्य। गोपाः। महतः। बभूवुः॥ ९॥

या पुरस्ताद् युज्यते या च पश्चाद् या विश्वतो युज्यते या च सर्वतः।

---

१ P एकऽजाः।. २ R ३. ३ K $\overset{m}{K}$ $\overset{m}{S}$ Dc पृष्टयो. V J Cp पृष्टयः।. P प्रष्टयः।. $\overset{2}{P}$ प्रष्ट्यः।. We with A $\overset{h}{B}$ D R Cs $\overset{2}{P}$ प्रष्टयो. ४ R $\overset{m}{S}$ अनुसं°. ५ D $\overset{m}{K}$ P अस्य.

यया यज्ञः प्राङ् तायते तां त्वा पृच्छामि कतमा सर्चाम्[1] ॥ १० ॥ (२६)

या । पुरस्तात् । युज्यते । या । च । पश्चात् । या । विश्वतः । युज्यते । या । च । सर्वतः ।
यया । यज्ञः । प्राङ् । तायते । ताम् । त्वा । पृच्छामि । कतमा । सा । ऋचाम् ॥१०॥ (२६)

यदेजति पतति यच्च तिष्ठति प्राणदप्राणन्निमिषच्च यद् भुवत् ।
तद् दाधार पृथिवीं विश्वरूपं तत् संभूय भवत्येकमेव ॥ ११ ॥

यत् । एजति । पतति । यत् । च । तिष्ठति । प्राणत् । अप्राणत् । निऽमिषत् । च ।
यत् । भुवत् ।
तत् । दाधार । पृथिवीम्[2] । विश्वऽरूपम् । तत् । सम्ऽभूय । भवति । एकम् । एव ॥ ११ ॥

अनन्तं विततं पुरुत्रानन्तमन्तवच्चा समन्ते ।
ते नाकपालश्चरति विचिन्वन् विद्वान् भूतमुत भव्यमस्य ॥ १२ ॥

अनन्तम् । विऽततम् । पुरुऽत्रा । अनन्तम् । अन्तऽवत् । च । समन्ते इति सम्ऽअन्ते ।
ते इति । नाकऽपालः । चरति । विऽचिन्वन् । विद्वान् । भूतम् । उत । भव्यम् । अस्य ॥ १२ ॥

प्रजापतिश्चरति गर्भे अन्तरदृश्यमानो बहुधा वि जायते ।
अर्धेन विश्वं भुवनं जजान यदस्यार्धं कतमः स केतुः ॥ १३ ॥

प्रजाऽपतिः । चरति । गर्भे । अन्तः । अदृश्यमानः । बहुऽधा । वि । जायते ।
अर्धेन । विश्वम् । भुवनम् । जजान । यत् । अस्य । अर्धम् । कतमः । सः । केतुः ॥ १३ ॥

ऊर्ध्वं भरन्तमुदकं कुम्भेनेवोदहार्यम् ।
पश्यन्ति सर्वे चक्षुषा न सर्वे मनसा विदुः ॥ १४ ॥

ऊर्ध्वम् । भरन्तम् । उदकम् । कुम्भेनऽइव । उदऽहार्यम् ।
पश्यन्ति । सर्वे । चक्षुषा । न । सर्वे । मनसा । विदुः ॥ १४ ॥

दूरे पूर्णेन वसति दूर ऊनेन हीयते ।
महद् यक्षं भुवनस्य मध्ये तस्मै बलिं राष्ट्रभृतो भरन्ति ॥ १५ ॥

दूरे । पूर्णेन । वसति । दूरे । ऊनेन । हीयते ।

---

१ A सर्चा. B सर्चाम्. K सऋचाम्. We with BDKRSV Dc Cs. २ A पृथिवी. J पृथिवी ।

महत् । यक्षम् । भुवनस्य । मध्ये । तस्मै । बलिम् । राष्ट्रऽभृतः । भरन्ति ॥ १५ ॥

**यतः सूर्य उदेत्यस्तं यत्र च गच्छति ।**
**तदेव मन्येहं ज्येष्ठं तदु नात्येति किं चन ॥ १६ ॥**

यतः । सूर्यः । उत्ऽएति । अस्तम् । यत्र । च । गच्छति ।
तत् । एव । मन्ये । अहम् । ज्येष्ठम् । तत् । ऊं इति । न । अति । एति । किम् । चन ॥ १६ ॥

**ये अर्वाङ् मध्य उत वा पुराणं वेदं विद्वांसमभितो वदन्ति ।**
**आदित्यमेव ते परि वदन्ति सर्वे अग्निं द्वितीयं त्रिवृतं च हंसम् ॥ १७ ॥**

ये । अर्वाङ् । मध्ये । उत । वा । पुराणम् । वेदम् । विद्वांसम् । अभितः । वदन्ति ।
आदित्यम् । एव । ते । परि । वदन्ति । सर्वे । अग्निम् । द्वितीयम् । त्रिऽवृतम् । च । हंसम् ॥ १७ ॥

**सहस्राह्ण्यं वियतावस्य पक्षौ हरेर्हंसस्य पततः[1] स्वर्गम् ।**
**स देवान्त्सर्वानुरस्युपदद्य संपश्यन् याति भुवनानि विश्वा ॥ १८ ॥**

सहस्रऽअह्न्यम् । विऽयतौ । अस्य । पक्षौ । हरेः । हंसस्य । पततः । स्वःऽगम् ।
सः । देवान् । सर्वान् । उरसि । उपऽदद्य । सम्ऽपश्यन् । याति । भुवनानि । विश्वा ॥ १८ ॥

**सत्येनोर्ध्वस्तपति ब्रह्मणार्वाङ् वि पश्यति ।**
**प्राणेन तिर्यङ् प्राणति यस्मिन् ज्येष्ठमधि श्रितम् ॥ १९ ॥**

सत्येन । ऊर्ध्वः । तपति । ब्रह्मणा । अर्वाङ् । वि । पश्यति ।
प्राणेन । तिर्यङ् । प्र । अनति । यस्मिन् । ज्येष्ठम् । अधि । श्रितम् ॥ १९ ॥

**यो वै ते विद्यादरणी याभ्यां निर्मथ्यते वसु ।**
**स विद्वान् ज्येष्ठं मन्येत स विद्याद् ब्राह्मणं महत् ॥ २० ॥** (२७)

यः । वै । ते इति । विद्यात् । अरणी इति । याभ्याम् । निःऽमथ्यते । वसु ।
सः । विद्वान् । ज्येष्ठम् । मन्येत । सः । विद्यात् । ब्राह्मणम् । महत् ॥ २० ॥ (२७)

**अपादग्रे समभवत् सो अग्रे स्वः[3]राभरत् ।**

१ B B^h D S^m V Cs पतत स्वर्गम्. We with A K K^m R Dc. २ P J अनंति ।. We with P^2 Cr. ३ B B^h D S^m Cs ३. We with K K^m V Dc.

चतुष्पाद् भूत्वा भोग्यः सर्वमादत्त भोजनम् ॥ २१ ॥

अपात् । अग्रे । सम् । अभवत् । सः । अग्रे । स्वः । आ । अभरत् ।
चतुःऽपात् । भूत्वा । भोग्यः । सर्वम् । आ । अदत्त । भोजनम् ॥ २१ ॥

भोग्यो भवदथो अन्नमदद् बहु ।
यो देवमुत्तरावन्तमुपासातै सनातनम् ॥ २२ ॥

भोग्यः । भवत् । अथो इति । अन्नम् । अदत् । बहु ।
यः । देवम् । उत्तरऽवन्तम् । उपऽआसातै । सनातनम् ॥ २२ ॥

सनातनमेनमाहुरुताद्य स्यात् पुनर्णवः ।
अहोरात्रे प्र जायेते अन्यो अन्यस्य रूपयोः ॥ २३ ॥

सनातनम् । एनम् । आहुः । उत । अद्य । स्यात् । पुनःऽनवः ।
अहोरात्रे इति । प्र । जायेते इति । अन्यः । अन्यस्य । रूपयोः ॥ २३ ॥

शतं सहस्रमयुतं न्यर्बुदमसंख्येयं स्वमस्मिन् निविष्टम् ।
तदस्य घ्नन्त्यभिपश्यत एव तस्माद् देवो रोचत एष एतत् ॥ २४ ॥

शतम् । सहस्रम् । अयुतम् । निऽअर्बुदम् । असम्ऽख्येयम् । स्वम् । अस्मिन् । निऽविष्टम् ।
तत् । अस्य । घ्नन्ति । अभिऽपश्यतः । एव । तस्मात् । देवः । रोचते । एषः । एतत् ॥ २४ ॥

बालादेकमणीयस्कमुतैकं नेव दृश्यते ।
ततः परिष्वजीयसी देवता सा मम प्रिया ॥ २५ ॥

बालात् । एकम् । अणीयःऽकम् । उत । एकम् । नऽइव । दृश्यते ।
ततः । परिऽस्वजीयसी । देवता । सा । मम । प्रिया ॥ २५ ॥

इयं कल्याण्य[1]जरा मर्त्यस्यामृता गृहे ।
यस्मै कृता शये स यश्चकार जजार सः ॥ २६ ॥

इयम् । कल्याणी । अजरा[3] । मर्त्यस्य । अमृता[4] । गृहे ।
यस्मै । कृता । शये । सः । यः । चकार । जजार । सः ॥ २६ ॥

त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।

---

१ B K^m V मम. २ A B B^h D R S^m Cs ३. We with K K^m V Dc. ३ P अजराः । changed from अजरा ।. We with P^2 J Cp. ४ P P^2 Cp अमृताः ।. J अमृता । altered to अमृताः ।.

चतुष्पाद् भूत्वा भोग्यः सर्वमादत्त भोजनम् ॥ २१ ॥

अपात् । अग्ने । सम् । अभवत् । सः । अग्ने । स्वः । आ । अभरत् ।

चतुःऽपात् । भूत्वा । भोग्यः । सर्वम् । आ । अदत्त । भोजनम् ॥ २१ ॥

भोग्यो भवदथो अन्नमदद् बहु ।

यो देवमुत्तरावन्तमुपासातै सनातनम् ॥ २२ ॥

भोग्यः । भवत् । अथो इति । अन्नम् । अदत् । बहु ।

यः । देवम् । उत्तरऽवन्तम् । उपऽआसातै । सनातनम् ॥ २२ ॥

सनातनमेनमाहुरुताद्य स्यात् पुनर्णवः ।

अहोरात्रे प्र जायेते अन्यो अन्यस्य रूपयोः ॥ २३ ॥

सनातनम् । एनम् । आहुः । उत । अद्य । स्यात् । पुनःऽनवः ।

अहोरात्रे इति । प्र । जायेते इति । अन्यः । अन्यस्य । रूपयोः ॥ २३ ॥

शतं सहस्रमयुतं न्यर्बुदमसंख्येयं स्वमस्मिन् निविष्टम् ।

तदस्य घ्नन्त्यभिपश्यत एव तस्माद् देवो रोचत एष एतत् ॥ २४ ॥

शतम् । सहस्रम् । अयुतम् । निऽअर्बुदम् । असम्ऽख्येयम् । स्वम् । अस्मिन् । निऽविष्टम् ।

तत् । अस्य । घ्नन्ति । अभिऽपश्यतः । एव । तस्मात् । देवः । रोचते । एषः । एतत् ॥ ३४ ॥

बालादेकमणीयस्कमुतैकं नेव दृश्यते ।

ततः परिष्वजीयसी देवता सा मम प्रिया ॥ २५ ॥

बालात् । एकम् । अणीयःऽकम् । उत । एकम् । नऽइव । दृश्यते ।

ततः । परिऽस्वजीयसी । देवता । सा । मम । प्रिया ॥ २५ ॥

इयं कल्याण्यजरा मर्त्यस्यामृता गृहे ।

यस्मै कृता शये स यश्चकार जजार सः ॥ २६ ॥

इयम् । कल्याणी । अजरा । मर्त्यस्य । अमृता । गृहे ।

यस्मै । कृता । शये । सः । यः । चकार । जजार । सः ॥ २६ ॥

त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।

---

१ B $\overset{m}{K}$ V मम. २ A B $\overset{h}{B}$ D R $\overset{m}{S}$ Cs ३. We with K $\overset{m}{K}$ V Dc. ३ P अजराः । changed from अजरा ।. We with $\overset{2}{P}$ J Cp. ४ P $\overset{2}{P}$ Cp अमृताः ।. J अमृता । altered to अमृताः ।.

अपूर्वेणेषिता वाचस्ता वदन्ति यथायथम् ।
वदन्तीर्यत्र गच्छन्ति तदाहुर्ब्राह्मणं महत् ॥ ३३ ॥

अपूर्वेण । इषिताः । वाचः । ताः । वदन्ति । यथाऽयथम् ।
वदन्तीः । यत्र । गच्छन्ति । तत् । आहुः । ब्राह्मणम् । महत् ॥ ३३ ॥

यत्र देवाश्च मनुष्याश्चारा नाभाविव श्रिताः ।
अपां त्वा पुष्पं पृच्छामि यत्र तन्मायया हितम् ॥ ३४ ॥

यत्र । देवाः । च । मनुष्याः । च । अराः । नाभौऽइव । श्रिताः ।
अपाम् । त्वा । पुष्पम् । पृच्छामि । यत्र । तत् । मायया । हितम् ॥ ३४ ॥

येभिर्वात इषितः प्रवाति ये ददन्ते पञ्च दिशः सध्रीचीः ।
य आहुतिमत्यमन्यन्त देवा अपां नेतारः कतमे त आसन् ॥ ३५ ॥

येभिः । वातः । इषितः । प्रऽवाति । ये । ददन्ते । पञ्च । दिशः । सध्रीचीः ।
ये । आऽहुतिम् । अतिऽअमन्यन्त । देवाः । अपाम् । नेतारः । कतमे । ते । आसन् ॥ ३५ ॥

इमामेषां पृथिवीं वस्त एकोन्तरिक्षं पर्येको बभूव ।
दिवमेषां ददते यो विधर्ता विश्वा आशाः प्रति रक्षन्त्येके ॥ ३६ ॥

इमाम् । एषाम् । पृथिवीम् । वस्ते । एकः । अन्तरिक्षम् । परि । एकः । बभूव ।
दिवम् । एषाम् । ददते । यः । विऽधर्ता । विश्वाः । आशाः । प्रति । रक्षन्ति । एके ॥ ३६ ॥

यो विद्यात् सूत्रं विततं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्य यो विद्यात् स विद्याद् ब्राह्मणं महत् ॥ ३७ ॥

यः । विद्यात् । सूत्रम् । विऽततम् । यस्मिन् । आऽउताः । प्रऽजाः । इमाः ।
सूत्रम् । सूत्रस्य । यः । विद्यात् । सः । विद्यात् । ब्राह्मणम् । महत् ॥ ३७ ॥

वेदाहं सूत्रं विततं यस्मिन्नोताः प्रजा इमाः ।
सूत्रं सूत्रस्याहं वेदाथो यद् ब्राह्मणं महत् ॥ ३८ ॥

वेद । अहम् । सूत्रम् । विऽततम् । यस्मिन् । आऽउताः । प्रऽजाः । इमाः ।
सूत्रम् । सूत्रस्य । अहम् । वेद । अथो इति । यत् । ब्राह्मणम् । महत् ॥ ३८ ॥

यदन्तरा द्यावापृथिवी अग्निरैत् प्रदहन् विश्वदाव्यः ।

---

१ B अपूर्वे°. २ B K[m] V वेदाथो.

यत्रातिष्ठन्नेकपत्नीः परस्तात् क्वेवासीन्मातरिश्वा तदानीम् ॥ ३९ ॥

यत् । अन्तरा । द्यावापृथिवी इति । अग्निः । ऐत् । प्रऽदहन् । विश्वऽदाव्यः ।

यत्र । अतिष्ठन् । एकऽपत्नीः । परस्तात् । क्वऽइव । आसीत् । मातरिश्वा । तदानीम् ॥ ३९ ॥

अप्स्वासीन्मातरिश्वा प्रविष्टः प्रविष्टा देवाः सलिलान्यासन् ।

बृहन् ह तस्थौ रजसो विमानः पवमानो हरित आ विवेश ॥ ४० ॥

अप्ऽसु । आसीत् । मातरिश्वा । प्रऽविष्टः । प्रऽविष्टाः । देवाः । सलिलानि । आसन् ।

बृहन् । ह । तस्थौ । रजसः । विऽमानः । पवमानः । हरितः । आ । विवेश ॥ ४० ॥

उत्तरेणेव गायत्रीममृतेधि वि चक्रमे ।

साम्ना ये साम संविदुरजस्तद् ददृशे क्व ॥ ४१ ॥

उत्तरेणऽइव । गायत्रीम् । अमृते । अधि । वि । चक्रमे ।

साम्ना । ये । साम । सम्ऽविदुः । अजः । तत् । ददृशे । क्व ॥ ४१ ॥

निवेशनः संगमनो वसूनां देव इव सविता सत्यधर्मा ।

इन्द्रो न तस्थौ समरे धनानाम् ॥ ४२ ॥

निऽवेशनः । सम्ऽगमनः । वसूनाम् । देवःऽइव । सविता । सत्यऽधर्मा ।

इन्द्रः । न । तस्थौ । सम्ऽअरे । धनानाम् ॥ ४२ ॥

पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम् ।

तस्मिन् यद् यक्षमात्मन्वत् तद् वै ब्रह्मविदो विदुः ॥ ४३ ॥

पुण्डरीकम् । नवऽद्वारम् । त्रिऽभिः । गुणेभिः । आऽवृतम् ।

तस्मिन् । यत् । यक्षम् । आत्मन्ऽवत् । तत् । वै । ब्रह्मऽविदः । विदुः ॥ ४३ ॥

अकामो धीरो अमृतः स्वयंभू रसेन तृप्तो न कुतश्चनोनः ।

तमेव विद्वान् न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ॥४४॥(२९)

अकामः । धीरः । अमृतः । स्वयम्ऽभूः । रसेन । तृप्तः । न । कुतः । चन । ऊनः ।

तम् । एव । विद्वान् । न । बिभाय । मृत्योः । आत्मानम् । धीरम् । अजरम् । युवानम् ॥४४॥(२९)

चतुर्थेऽनुवाके द्वितीयं सूक्तम् ॥

इति चतुर्थोऽनुवाकः ॥

---

१ P J क्वऽइव ।. २ A वसूनाम्. ३ P सऽगमनः ।.

"अघायताम्" इति सूक्तम् आहुत्यर्थगोवधे विनियुज्यते। सा च वन्ध्या गौः शतौदनेत्युच्यते। तस्या वधेन तस्या मांसाहुत्या च यद्यजनं तद् अग्निष्टोमादपि अतिरात्रादपि च श्रेष्ठम् इत्यादिरूपा प्रशंसा। यैव हन्यते तां प्रति हन्तृभ्यो मा भैषीस्त्वं देवी भविष्यसि त्वां स्वर्गे देवा गोप्स्यन्तीत्यादि प्रोत्साहनम्। यस्त्वां हन्ति यो वा पचति यो वा जुहोति स उत्तमं स्वर्गं गच्छतीत्यादिका गोभिवचनेन प्रशंसा च क्रियते गोमेधस्य॥

साम्प्रदायिकास्तु एवम्।

"अघायताम्" इत्यर्थसूक्तेन शतौदनसवे निरुप्तहविरभिमर्शनं सपातं दातृवाचनं दानं च कुर्यात्। तथा च सूत्रम्। "अ-
"घायताम् इत्यत्र मुखम् अपिनह्यमानम् अनुमन्त्रयते। सपत्नेषु वज्रं ग्रावा त्वैषः [२] इति निपतन्तम्। वेदिष्टे [२] इति
"मन्त्रोक्तम् आस्तृणाति। विशस्योदनासु श्रयणीषु शतम् अवदानानि वध्रिसनद्धानि पृथगोदनेषूपर्यादधाति। मध्यमायाः प्रथमे
"रन्धिण्यामिक्षा दशमेभितः सप्तसप्तापूपान् परिश्रयति। पञ्चदशे पुरोडाशौ अग्रे हिरण्यम् अपो देवीः [२७] इत्यग्रत उदकु-
"म्भान्। बालास्ते [३] इति सूक्तेन सपातवर्ती प्रदक्षिणम् अग्निम् अनुपरिणीयोपवेशनप्रक्षालनाचमनम् उक्तम्। पाणावुदकम्
"आनीय अथामुष्यौदनस्यावदानानां च मध्यात् पूर्वार्धाच्च द्विरवदायोपरिष्टाद् उदकेनाभिघार्य जुहोति सोमेन पूतो जठरे सीद
"ब्रह्मणाम् आर्षेयेषु नि दध ओदन त्वेत्यथ प्राश्नाति। अग्नेष्ट्वास्येन प्राश्नामि बृहस्पतेर्मुखेन इन्द्रस्य त्वा जठरे सादयामि वरुण-
"स्योदरे तद्यथाहुतम् इष्टं प्राश्नीयाद् देवो त्वा प्राश्नाम्यात्मास्यात्मन्नात्मानं मे मा हिंसीरिति प्राशितम् अनुमन्त्रयते योमिर्नृमणा[2]
"नाम ब्राह्मणेषु प्रविष्टः। तस्मिन्न एष सुहुतोस्त्वोदनः स मा मा हिंसीत् परमे व्योमन्। सो अस्मभ्यम् अस्तु परमे व्यो-
"मन्निति दातारं वाचयति। वीक्षणान्तं शतौदनायाः प्रातर्जपेन व्याख्यातम्" इति कौ० ८. ६॥

**अघायतामपि नह्या मुखानि सपत्नेषु वज्रमर्पयैतम्[1]।**
**इन्द्रेण दत्ता प्रथमा शतौदना भ्रातृव्यघ्नी यजमानस्य गातुः॥ १॥**

अघऽयताम्। अपि। नह्य। मुखानि। सऽपत्नेषु। वज्रम्। अर्पय। एतम्।
इन्द्रेण। दत्ता। प्रथमा। शतऽओदना। भ्रातृव्यऽघ्नी। यजमानस्य। गातुः॥ १॥

**वेदिष्टे चर्म भवतु बर्हिर्लोमानि यानि ते।**
**एषा त्वा रशनाग्रभीद् ग्रावा त्वैषोधि नृत्यतु॥ २॥**

वेदिः। ते। चर्म। भवतु। बर्हिः। लोमानि। यानि। ते।
एषा। त्वा। रशना। अग्रभीत्। ग्रावा। त्वा। एषः। अधि। नृत्यतु॥ २॥

**बालास्ते प्रोक्षणीः सन्तु जिह्वा सं मार्ष्ट्वघ्न्ये[3]।**
**शुद्धा त्वं यज्ञिया भूत्वा दिवं प्रेहि शतौदने॥ ३॥**

बालाः। ते। प्रऽउक्षणीः। सन्तु। जिह्वा। सम्। मार्ष्टु। अघ्न्ये।
शुद्धा। त्वम्। यज्ञिया। भूत्वा। दिवम्। प्र। इहि। शतऽओदने॥ ३॥

**यः शतौदनां पचति कामप्रेण स कल्पते।**

१ R °येतम्. २ P एनम्।. ३ B मार्ष्ट्वघ्न्ये.

1 So V1 V2. 2 V2 नृम्णा.

प्रीता ह्यस्यर्त्विजः सर्वे यन्ति यथायथम् ॥ ४ ॥

यः । शतऽओदनाम् । पचति । कामऽप्रेण । सः । कल्पते ।
प्रीताः । हि । अस्य । ऋत्विजः । सर्वे । यन्ति । यथाऽयथम् ॥ ४ ॥

स स्वर्गमा रोहति यत्रादस्त्रिदिवं दिवः ।
अपूपनाभिं कृत्वा यो ददाति शतौदनाम् ॥ ५ ॥

सः । स्वःऽगम् । आ । रोहति । यत्र । अदः । त्रिऽदिवम् । दिवः ।
अपूपऽनाभिम् । कृत्वा । यः । ददाति । शतऽओदनाम् ॥ ५ ॥

स तांल्लोकान्त्समाप्नोति ये दिव्या ये च पार्थिवाः ।
हिरण्यज्योतिषं कृत्वा यो ददाति शतौदनाम् ॥ ६ ॥

सः । तान् । लोकान् । सम् । आप्नोति । ये । दिव्याः । ये । च । पार्थिवाः ।
हिरण्यऽज्योतिषम् । कृत्वा । यः । ददाति । शतऽओदनाम् ॥ ६ ॥

ये ते देवि शमितारः पक्तारो ये च ते जनाः ।
ते त्वा सर्वे गोप्स्यन्ति मैभ्यो भैषीः शतौदने ॥ ७ ॥

ये । ते । देवि । शमितारः । पक्तारः । ये । च । ते । जनाः ।
ते । त्वा । सर्वे । गोप्स्यन्ति । मा । एभ्यः । भैषीः । शतऽओदने ॥ ७ ॥

वसवस्त्वा दक्षिणत उत्तरान्मरुतस्त्वा ।
आदित्याः पश्चाद् गोप्स्यन्ति साग्निष्टोममति द्रव ॥ ८ ॥

वसवः । त्वा । दक्षिणतः । उत्तरात् । मरुतः । त्वा ।
आदित्याः । पश्चात् । गोप्स्यन्ति । सा । अग्निऽस्तोमम् । अति । द्रव ॥ ८ ॥

देवाः पितरो मनुष्या[1] गन्धर्वाप्सरसश्च ये ।
ते त्वा सर्वे गोप्स्यन्ति सातिरात्रमति द्रव ॥ ९ ॥

देवाः । पितरः । मनुष्याः । गन्धर्वऽअप्सरसः । च । ये ।
ते । त्वा । सर्वे । गोप्स्यन्ति । सा । अतिऽरात्रम् । अति । द्रव ॥ ९ ॥

अन्तरिक्षं दिवं भूमिमादित्यान् मरुतो दिशः ।

१ So we with all our Mss. See Rw.

लोकान्त्स सर्वानाप्नोति यो ददाति शतौदनाम् ॥ १० ॥ (३०)

अन्तरिक्षम् । दिवम् । भूमिम् । आदित्यान् । मरुतः । दिशः ।

लोकान् । सः । सर्वान् । आप्नोति । यः । ददाति । शतऽओदनाम् ॥ १० ॥ (३०)

घृतं प्रोक्षन्ती सुभगा देवी देवान् गमिष्यति ।

पक्तारमघ्न्ये मा हिंसीर्दिवं प्रेहि शतौदने ॥ ११ ॥

घृतम् । प्रऽउक्षन्ती । सुऽभगा । देवी । देवान् । गमिष्यति ।

पक्तारम् । अघ्न्ये । मा । हिंसीः । दिवम् । प्र । इहि । शतऽओदने ॥ ११ ॥

ये देवा दिविषदो अन्तरिक्षसदश्च [1]ये ये चेमे भूम्यामधि ।

तेभ्यस्त्वं धुक्ष्व[2] सर्वदा क्षीरं सर्पिरथो मधु ॥ १२ ॥

ये । देवाः । दिविऽसदः । अन्तरिक्षऽसदः । च । ये । ये । च । इमे । भूम्याम् । अधि ।

तेभ्यः । त्वम् । धुक्ष्व । सर्वदा । क्षीरम् । सर्पिः । अथो इति । मधु ॥ १२ ॥

[3]यत् ते शिरो यत् ते मुखं यौ कर्णौ ये च ते हनू ।

आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥ १३ ॥

यत् । ते । शिरः । यत् । ते । मुखम् । यौ । कर्णौ । ये इति । च । ते । हनू इति ।

आमिक्षाम् । दुह्रताम् । दात्रे । क्षीरम् ।० ॥ १३ ॥

यौ त ओष्ठौ ये नासिके ये शृङ्गे ये च तेऽक्षिणी । आमिक्षां० ॥ १४ ॥

यौ । ते । ओष्ठौ । ये इति । नासिके इति । ये इति । शृङ्गे इति । ये इति । च । ते ।
अक्षिणी इति ॥० ॥ १४ ॥

यत्[4] ते क्लोमा[5] यद्धृदयं पुरीतत् सहकण्ठिका । आमिक्षां० ॥ १५ ॥

यत् । ते । क्लोमा । यत् । हृदयम् । पुरिऽतत् । सहऽकण्ठिका ॥० ॥ १५ ॥

यत् ते यकृद् ये मतस्ने[6] यदान्त्रं याश्च ते गुदाः । आमिक्षां० ॥ १६ ॥

यत् । ते । यकृत् । ये इति । मतस्ने इति । यत् । आन्त्रम् । याः । च । ते । गुदाः ॥० ॥१६॥

---

१ B̊ᶜ K̊ᵐ V Dc ये ।. A D R S̊ᵐ Cs omit the virâma. २ K ध्युक्ष्व (!). B̊ʰ K̊ᵐ S̊ᵐ Dc Cs Cp धुक्ष. We with A D R V P P̊² J. ३ B येत्ते (!). ४ So we with all our authorities. [illegible] read यस्ते. ५ K क्लोम्ना (sic). ६ A B K̊ᵐ R Dc मतस्ते. P P̊² J मतस्ते इति ।.
[illegible]

यस्ते प्लाशिर्यो वनिष्ठुर्यौ कुक्षी यच्च चर्म ते । आमिक्षां० ॥ १७ ॥

यः । ते । प्लाशिः । यः । वनिष्ठुः । यौ । कुक्षी इति । यत् । च । चर्म । ते ॥० ॥ १७ ॥

यत् ते मज्जा यदस्थि यन्मांसं यच्च लोहितम् । आमिक्षां० ॥ १८ ॥

यत् । ते । मज्जा । यत् । अस्थि । यत् । मांसम् । यत् । च । लोहितम् ॥० ॥ १८ ॥

यौ ते बाहू ये दोषणी यावंसौ या च ते ककुत् । आमिक्षां० ॥ १९ ॥

यौ । ते । बाहू इति । ये इति । दोषणी इति । यौ । अंसौ । या । च । ते । ककुत् ॥० ॥ १९ ॥

यास्ते ग्रीवा ये स्कन्धा याः पृष्टीर्याश्च पर्शवः । आमिक्षां० ॥ २० ॥ (३१)

याः । ते । ग्रीवाः । ये । स्कन्धाः । याः । पृष्टीः । याः । च । पर्शवः ॥० ॥ २० ॥ (३१)

यौ त ऊरू अष्ठीवन्तौ ये श्रोणी या च ते भसत् । आमिक्षां० ॥ २१ ॥

यौ । ते । ऊरू इति । अष्ठीवन्तौ । ये इति । श्रोणी इति । या । च । ते । भसत् ॥० ॥ २१ ॥

यत् ते पुच्छं ये ते बाला यदूधो ये च ते स्तनाः । आमिक्षां० ॥ २२ ॥

यत् । ते । पुच्छम् । ये । ते । बालाः । यत् । ऊधः । ये । च । ते । स्तनाः ॥० ॥ २२ ॥

यास्ते जङ्घा याः कुष्ठिका ऋच्छरा ये च ते शफाः । आमिक्षां० ॥ २३ ॥

याः । ते । जङ्घाः । याः । कुष्ठिकाः । ऋच्छराः । ये । च । ते । शफाः ॥० ॥ २३ ॥

यत् ते चर्म शतौदने यानि लोमान्यघ्न्ये ।
आमिक्षां दुह्रतां दात्रे क्षीरं सर्पिरथो मधु ॥ २४ ॥

यत् । ते । चर्म । शतऽओदने । यानि । लोमानि । अघ्न्ये ।
आमिक्षाम् । दुह्रताम् । दात्रे । क्षीरम् । सर्पिः । अथो इति । मधु ॥ २४ ॥

क्रोडौ ते स्तां पुरोडाशावाज्येनाभिघारितौ ।
तौ पक्षौ देवि कृत्वा सा पक्तारं दिवं वह ॥ २५ ॥

क्रोडौ । ते । स्ताम् । पुरोडाशौ । आज्येन । अभिऽघारितौ ।

---

१ S प्लाशुर्यो changed from प्लाशिर्यो. २ Dc °ष्ठु° changed to °ष्टु°. A B D K R S V P P J वनिष्टुः ।. We with K Cs Cp. ३ So we with all our authorities. See Rw. ४ A दोर्षणी. P J Cp दोर्षणी इति. We with B D K R S V Dc Cs P. ५ K K S Dc पृष्ठी°. Cp पृष्ठीः ।. P पृष्ठीः ।. We with A B D R V Cs P J. ६ B B R P अष्ठीवन्तौ. ७ P कुष्ठिकाः ।.

तौ । पक्षौ । देवि । कृत्वा । सा । पक्तारम् । दिवम् । वह ॥ २५ ॥

**उलूखले मुसले यश्च चर्मणि यो वा शूर्पे तण्डुलः कणः ।**
**यं वा वातो मातरिश्वा पवमानो ममाथाग्निष्टद्धोता सुहुतं कृणोतु ॥२६॥**

उलूखले । मुसले । यः । च । चर्मणि । यः । वा । शूर्पे । तण्डुलः । कणः ।
यम् । वा । वातः । मातरिश्वा । पवमानः । ममाथ । अग्निः । तत् । होता । सुऽहुतम् । कृणोतु ॥ २६ ॥

**अपो देवीर्मधुमतीर्घृतश्चुतो ब्रह्मणां हस्तेषु प्रपृथक् सादयामि ।**
**यत्काम इदमभिषिञ्चामि वोहं तन्मे सर्वं सं पद्यतां वयं स्याम पतयो रयीणाम् ॥ २७ ॥ (३२)**

अपः । देवीः । मधुऽमतीः । घृतऽश्चुतः । ब्रह्मणाम्[1] । हस्तेषु । प्रऽपृथक् । सादयामि ।
यत्ऽकामः । इदम् । अभिऽसिञ्चामि[2] । वः । अहम् । तत् । मे । सर्वम् । सम् । पद्यताम् । वयम् । स्याम । पतयः । रयीणाम् ॥ २७ ॥ (३२)

इति पञ्चमेनुवाके प्रथमं सूक्तम् ॥

"नमस्ते जायमानायै" इति सूक्ते पूर्वसूक्तोक्तवशा न केवल मध्यमासात्मिका गौर्भवति अपि तु सा विशसनादनन्तरं महती काचिद् देवी भूत्वा देवेषु मध्ये सर्वात्मिका भवति यज्ञियेषु च यज्ञिया भवतीत्यादि तस्या माहात्म्यं प्रशसा चोक्ता ॥

सांप्रदायिकास्तु एवम् । "नमस्ते जायमानायै" इत्यर्थसूक्तेन वशासवे निरुप्तहविरभिमर्शनसपातदातृवाचनदानानि कुर्यात् । तद् उक्त कौशिकेन । "नमस्ते जायमानायै [१० १०] ददामि [१२.४] इति वशाम् उदपात्रेण सपातवता सम्प्रोक्ष्याभि-"मन्त्र्याभिनिगद्य दद्याद् दाता वाच्यमानो भूमिष्ट्वा [३ २९.८] इत्येना प्रतिगृह्णाति" इति [कौ० ८.७] ॥

**नमस्ते जायमानायै जाताया उत ते नमः ।**
**बालेभ्यः शफेभ्यो रूपायाघ्न्ये ते नमः ॥ १ ॥**

नमः । ते । जायमानायै । जातायै । उत । ते । नमः ।
बालेभ्यः । शफेभ्यः । रूपाय । अघ्न्ये । ते । नमः ॥ १ ॥

**यो विद्यात् सप्त प्रवतः सप्त विद्यात् परावतः ।**
**शिरो यज्ञस्य यो विद्यात् स वशां प्रति गृह्णीयात् ॥ २ ॥**

यः । विद्यात् । सप्त । प्रऽवतः । सप्त । विद्यात् । पराऽवतः ।
शिरः । यज्ञस्य । यः । विद्यात्[3] । सः । वशाम् । प्रति । गृह्णीयात् ॥ २ ॥

---

१ P ब्राह्मणाम् ।. २ P °सिञ्चामि ।. ३ P विद्यात् ।. We with P J.

वेदाहं सप्त प्रवतः सप्त वेद परावतः।
शिरो यज्ञस्याहं वेद सोमं चास्यां विचक्षणम् ॥ ३ ॥

वेद। अहम्। सप्त। प्रऽवतः। सप्त। वेद। पराऽवतः।
शिरः। यज्ञस्य। अहम्। वेद। सोमम्। च। अस्याम्। विऽचक्षणम् ॥ ३ ॥

यया द्यौर्यया पृथिवी ययापो गुपिता इमाः।
वशां सहस्रधारां ब्रह्मणाच्छावदामसि ॥ ४ ॥

यया। द्यौः। यया। पृथिवी। यया। आपः। गुपिताः। इमाः।
वशाम्। सहस्रऽधाराम्। ब्रह्मणा। अच्छऽआवदामसि ॥ ४ ॥

शतं कंसाः शतं दोग्धारः शतं गोप्तारो अधि पृष्ठे अस्याः।
ये देवास्तस्यां प्राणन्ति ते वशां विदुरेकधा ॥ ५ ॥

शतम्। कंसाः। शतम्। दोग्धारः। शतम्। गोप्तारः। अधि। पृष्ठे। अस्याः।
ये। देवाः। तस्याम्। प्राणन्ति। ते। वशाम्। विदुः[1]। एकऽधा ॥ ५ ॥

यज्ञपदीराक्षीरा[2] स्वधाप्राणा महीलुका।
वशा पर्जन्यपत्नी देवाँ अप्येति ब्रह्मणा ॥ ६ ॥

यज्ञऽपदी। इराऽक्षीरा। स्वधाऽप्राणा। महीलुका।
वशा। पर्जन्यऽपत्नी। देवान्। अपि। एति। ब्रह्मणा ॥ ६ ॥

अनु त्वाग्निः प्राविशदनु सोमो वशे त्वा।
ऊधस्ते भद्रे पर्जन्यो विद्युतस्ते स्तना वशे ॥ ७ ॥

अनु। त्वा। अग्निः। प्र। अविशत्। अनु। सोमः। वशे। त्वा।
ऊधः। ते। भद्रे। पर्जन्यः। विऽद्युतः। ते। स्तनाः। वशे ॥ ७ ॥

अपस्त्वं धुक्षे[3] प्रथमा उर्वरा अपरा वशे।
तृतीयं राष्ट्रं धुक्षे[4]ऽन्नं क्षीरं वशे त्वम् ॥ ८ ॥

अपः। त्वम्। धुक्षे। प्रथमाः। उर्वराः। अपराः। वशे।
तृतीयम्। राष्ट्रम्। धुक्षे[4]। अन्नम्। क्षीरम्। वशे। त्वम् ॥ ८ ॥

---

१ P विदुः।. २ B R C॰ ॰क्षीरा. ३ K ध्युक्षे. ४ K ध्युक्षे।. P J Cp धुक्षे।. We with P

यदादित्यैर्हूयमानोपातिष्ठ ऋतावरि ।
इन्द्रः सहस्रं पात्रान्त्सोमं त्वापाययद् वशे ॥ ९ ॥

यत् । आदित्यैः । हूयमाना । उपऽअतिष्ठः । ऋतऽवरि ।
इन्द्रः । सहस्रम् । पात्रान् । सोमम् । त्वा । अपाययत् । वशे ॥ ९ ॥

यदनूचीन्द्रमैरात् त्वं ऋषभोह्वयत् ।
तस्मात् ते वृत्रहा पयः क्षीरं क्रुद्धोहरद् वशे ॥ १० ॥ (३३)

यत् । अनूची । इन्द्रम् । ऐः । आत् । त्वा । ऋषभः । अह्वयत् ।
तस्मात् । ते । वृत्रऽहा । पयः । क्षीरम् । क्रुद्धः । अहरत् । वशे । ॥ १० ॥ (३३)

यत् ते क्रुद्धो धनपतिरा क्षीरमहरद् वशे ।
इदं तदद्य नाकस्त्रिषु पात्रेषु रक्षति ॥ ११ ॥

यत् । ते । क्रुद्धः । धनऽपतिः । आ । क्षीरम् । अहरत् । वशे ।
इदम् । तत् । अद्य । नाकः । त्रिषु । पात्रेषु । रक्षति ॥ ११ ॥

त्रिषु पात्रेषु तं सोममा देव्यहरद् वशा ।
अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥ १२ ॥

त्रिषु । पात्रेषु । तम् । सोमम् । आ । देवी । अहरत् । वशा ।
अथर्वा । यत्र । दीक्षितः । बर्हिषि । आस्त । हिरण्यये ॥ १२ ॥

सं हि सोमेनागत समु सर्वेण पद्वता ।
वशा समुद्रमध्यष्ठाद् गन्धर्वैः कलिभिः सह ॥ १३ ॥

सम् । हि । सोमेन । अगत । सम् । ऊं इति । सर्वेण । पत्ऽवता ।
वशा । समुद्रम् । अधि । अस्थात् । गन्धर्वैः । कलिऽभिः । सह ॥ १३ ॥

सं हि वातेनागत समु सर्वैः पतत्रिभिः ।

---

१ K °यातिष्ठ. २ A B[h] K R V Dc °त्वर्ष°. Cs °त्वंवृषभो°. We with D K S[m]. ३ A B B[h] D K K[m] R S[m] V Dc Cs °भोह्व°. P[2] अह्वयत् ।. We with P J Cp. ४ A B[h] D K R Dc C° क्रुद्धोह°. We with K[m] S[m] V P P[2] J Cp. ५ K[m] S[m] क्षीरमहर°. ६ B देव्यहरद्वशा. ७ K °ध्यं-ष्ठाङ्गन्धर्वैः. ८ P[2] अगतः ।. P had आगत but has changed it to अगत ।. We with J Cp.

वशा संमुद्रे प्रानृत्यदृचः सामानि बिभ्रती ॥ १४ ॥

सम् । हि । वातेन । अगत । सम् । ऊं इति । सर्वैः । पतत्रिऽभिः ।

वशा । समुद्रे । प्र । अनृत्यत् । ऋचः । सामानि । बिभ्रती ॥ १४ ॥

सं हि सूर्येणागत समु सर्वेण चक्षुषा ।

वशा संमुद्रमत्यख्यद् भद्रा ज्योतींषि बिभ्रती ॥ १५ ॥

सम् । हि । सूर्येण । अगत । सम् । ऊं इति । सर्वेण । चक्षुषा ।

वशा । समुद्रम् । अति । अख्यत् । भद्रा । ज्योतींषि । बिभ्रती ॥ १५ ॥

अभीवृता हिरण्येन यदतिष्ठ ऋतावरि ।

अश्वः समुद्रो भूत्वाध्यस्कन्दद् वशे त्वा ॥ १६ ॥

अभिऽवृता । हिरण्येन । यत् । अतिष्ठः । ऋतऽवरि ।

अश्वः । समुद्रः । भूत्वा । अधि । अस्कन्दत् । वशे । त्वा ॥ १६ ॥

तद् भद्राः समगच्छन्त वशा देष्ट्र्यथो स्वधा ।

अथर्वा यत्र दीक्षितो बर्हिष्यास्त हिरण्यये ॥ १७ ॥

तत् । भद्राः । सम् । अगच्छन्त । वशा । देष्ट्री । अथो इति । स्वधा ।

अथर्वा । यत्र । दीक्षितः । बर्हिषि । आस्त । हिरण्यये ॥ १७ ॥

वशा माता राजन्यस्य वशा माता स्वधे तव ।

वशाया यज्ञ आयुधं ततश्चित्तमजायत ॥ १८ ॥

वशा । माता । राजन्यस्य । वशा । माता । स्वधे । तव ।

वशायाः । यज्ञे । आयुधम् । ततः । चित्तम् । अजायत ॥ १८ ॥

ऊर्ध्वो बिन्दुरुदचरद् ब्रह्मणः ककुदादधि ।

ततस्त्वं जज्ञिषे वशे ततो होताजायत ॥ १९ ॥

ऊर्ध्वः । बिन्दुः । उत् । अचरत् । ब्रह्मणः । ककुदात् । अधि ।

ततः । त्वम् । जज्ञिषे । वशे । ततः । होता । अजायत ॥ १९ ॥

आस्नस्ते गाथा अभवन्नुष्णिहाभ्यो बलं वशे ।

१ P here has simply and distinctly °अ° not °आ°. २ K अभवद्नुष्णि°. ३ K K बलं वशे.

पाजस्याज्जज्ञे यज्ञ स्तनेभ्यो रश्मयस्तव ॥ २० ॥ (३४)

आस्नः । ते । गाथाः । अभवन्[1] । उष्णिहाभ्यः । बलम् । वशे ।

पाजस्यात् । जज्ञे । यज्ञः । स्तनेभ्यः । रश्मयः । तव ॥ २० ॥ (३४)

ईर्माभ्यामयनं जातं सक्थिभ्यां च वशे तव ।

आन्त्रेभ्यो जज्ञिरे अत्रा उदरादधि वीरुधः ॥ २१ ॥

ईर्माभ्याम् । अयनम् । जातम् । सक्थिऽभ्याम् । च । वशे । तव ।

आन्त्रेभ्यः । जज्ञिरे । अत्राः । उदरात् । अधि । वीरुधः ॥ २१ ॥

यदुदरं वरुणस्यानुप्राविशथा वशे ।

ततस्त्वा ब्रह्मोदह्वयत् स हि नेत्रमवेत् तव ॥ २२ ॥

यत् । उदरम् । वरुणस्य । अनुऽप्राविशथाः । वशे ।

ततः । त्वा । ब्रह्मा । उत् । अह्वयत् । सः । हि । नेत्रम् । अवेत् । तव ॥ २२ ॥

सर्वे गर्भादवेपन्त जायमानादसूस्वः ।

ससूव हि तामाहुर्वशेति ब्रह्मभिः क्लृप्तः स ह्यस्या बन्धुः ॥ २३ ॥

सर्वे । गर्भात् । अवेपन्त । जायमानात् । असूस्वः ।

ससूव । हि । ताम् । आहुः । वशा । इति । ब्रह्मऽभिः । क्लृप्तः । सः । हि । अस्याः । बन्धुः ॥ २३ ॥

युध एकः सं सृजति यो अस्या एक इद् वशी ।

तरांसि यज्ञा अभवन्[2] तरसां चक्षुरभवद् वशा ॥ २४ ॥

युधः । एकः । सम् । सृजति[3] । यः । अस्याः । एकः । इत् । वशी ।

तरांसि । यज्ञाः । अभवन् । तरसाम् । चक्षुः । अभवत् । वशा ॥ २४ ॥

वशा यज्ञं प्रत्यगृह्णाद् वशा सूर्यमधारयत् ।

वशायामन्तरविशदोदनो[4] ब्रह्मणा सह ॥ २५ ॥

वशा । यज्ञम् । प्रति । अगृह्णात् । वशा । सूर्यम् । अधारयत् ।

वशायाम् । अन्तः । अविशत् । ओदनः । ब्रह्मणा । सह ॥ २५ ॥

---

१ $P^2$ °म् ।. २ A $B^h$ D $S^m$ V अभवन्तर°. ३ P सृजाति ।. ४ $K^m$ °विशदो°.

वशामेवामृतमाहुर्वशां मृत्युमुपासते ।
वशेदं सर्वमभवद् देवा मनुष्याउ३ असुराः पितर ऋषयः ॥ २६ ॥

वशाम् । एव । अमृतम् । आहुः । वशाम् । मृत्युम् । उप । आसते ।
वशा । इदम् । सर्वम् । अभवत् । देवाः । मनुष्याः३ । असुराः । पितरः । ऋषयः ॥२६॥

य एवं विद्यात् स वशां प्रति गृह्णीयात् ।
तथा हि यज्ञः सर्वपाद् दुहे दात्रेनपस्फुरन् ॥ २७ ॥

यः । एवम् । विद्यात् । सः । वशाम् । प्रति । गृह्णीयात् ।
तथा । हि । यज्ञः । सर्वऽपात् । दुहे । दात्रे । अनपऽस्फुरन् ॥ २७ ॥

तिस्रो जिह्वा वरुणस्यान्तर्दीद्यत्यासनि ।
तासां या मध्ये राजति सा वशा दुष्प्रतिग्रहा[1] ॥ २८ ॥

तिस्रः । जिह्वाः । वरुणस्य । अन्तः । दीद्यति । आसनि ।
तासाम् । या । मध्ये । राजति । सा । वशा । दुःऽप्रतिग्रहा ॥ २८ ॥

चतुर्धा रेतो अभवद् वशायाः ।
आपस्तुरीयममृतं तुरीयं यज्ञस्तुरीयं पशवस्तुरीयम् ॥ २९ ॥

चतुःऽधा । रेतः । अभवत् । वशायाः ।
आपः । तुरीयम् । अमृतम् । तुरीयम् । यज्ञः । तुरीयम् । पशवः । तुरीयम् ॥ २९ ॥

वशा द्यौर्वशा पृथिवी वशा विष्णुः प्रजापतिः ।
वशाया दुग्धमपिबन्त्साध्या वसवश्च ये ॥ ३० ॥

वशा । द्यौः । वशा । पृथिवी । वशा । विष्णुः । प्रजाऽपतिः ।
वशायाः । दुग्धम् । अपिबन् । साध्याः । वसवः । च । ये ॥ ३० ॥

वशाया दुग्धं पीत्वा साध्या वसवश्च ये ।
ते वै ब्रध्नस्य विष्टपि पयो अस्या उपासते ॥ ३१ ॥

वशायाः । दुग्धम् । पीत्वा । साध्याः । वसवः । च । ये ।
ते । वै । ब्रध्नस्य[2] । विष्टपि । पयः । अस्याः । उप । आसते ॥ ३१ ॥

---

१ A B[h] D K K[m] R S[m] Cs दुःप्रतिग्रहा. We with V Dc. २ P बध्नस्य. We with P[2] J Cp.

सोमंमेनामेकें दुह्रे घृतमेक उपांसते ।
य एवं विदुषे वशां ददुस्ते गतास्त्रिदिवं दिवः ॥ ३२ ॥

सोमम् । एनाम् । एके । दुह्रे । घृतम् । एके । उप । आसते ।
ये[1] । एवम् । विदुषे । वशाम् । ददुः । ते । गताः । त्रिऽदिवम् । दिवः ॥ ३२ ॥

ब्राह्मणेभ्यो वशां दत्त्वा सर्वांल्लोकान्त्समंश्नुते ।
ऋतं ह्यस्यामार्पितमपि ब्रह्माथो तपः ॥ ३३ ॥

ब्राह्मणेभ्यः । वशाम् । दत्त्वा । सर्वान् । लोकान् । सम् । अश्नुते ।
ऋतम् । हि । अस्याम् । आर्पितम् । अपि । ब्रह्म । अथो इति । तपः ॥ ३३ ॥

वशां देवा उप जीवन्ति वशां मनुष्याऽ उत ।
वशेदं सर्वमभवद् यावत् सूर्यो विपश्यति ॥ ३४ ॥ (३५)

वशाम् । देवाः । उप । जीवन्ति । वशाम् । मनुष्याः । उत ।
वशा । इदम् । सर्वम् । अभवत् । यावत् । सूर्यः । विऽपश्यति ॥ ३४ ॥ (३५)

पञ्चमेनुवाके द्वितीयं सूक्तम् ॥

पञ्चमोनुवाकः ॥

इति दशमं काण्डं समाप्तम् ॥

---

१ P P[2] J V Cp यः ।.

सोम॑मेना॒मेके॑ दुह्रे घृ॒तमेक॒ उपा॑सते ।
य ए॒वं वि॒दुषे॑ व॒शां द॒दुस्ते ग॒तास्त्रि॑दि॒वं दि॒वः ॥ ३२ ॥

सोम॑म् । ए॒नाम् । एके॑ । दु॒ह्रे॒ । घृ॒तम् । एके॑ । उप॑ । आ॒स॒ते॒ ।
ये[1] । ए॒वम् । वि॒दुषे॑ । व॒शाम् । द॒दुः । ते । ग॒ताः । त्रि॒ऽदि॒वम् । दि॒वः ॥ ३२ ॥

ब्रा॒ह्म॒णेभ्यो॑ व॒शां द॒त्त्वा सर्वाँ॑ल्लो॒कान्त्सम॑श्नुते ।
ऋ॒तं ह्य॑स्या॒मार्पि॑तम॒पि॒ ब्रह्मा॑थो॒ तपः॑ ॥ ३३ ॥

ब्रा॒ह्म॒णेभ्यः॑ । व॒शाम् । द॒त्त्वा । सर्वा॑न् । लो॒कान् । सम् । अ॒श्नु॒ते॒ ।
ऋ॒तम् । हि । अ॒स्याम् । आर्पि॑तम् । अपि॑ । ब्रह्म॑ । अथो॒ इति॑ । तपः॑ ॥ ३३ ॥

व॒शां दे॒वा उप॑ जीवन्ति व॒शां म॑नु॒ष्या॒ उ॒त ।
व॒शेदं सर्व॑मभव॒द् याव॒त् सूर्यो॑ वि॒पश्य॑ति ॥ ३४ ॥ (३५)

व॒शाम् । दे॒वाः । उप॑ । जी॒व॒न्ति॒ । व॒शाम् । म॒नु॒ष्याः॑ । उ॒त ।
व॒शा । इ॒दम् । सर्व॑म् । अ॒भ॒व॒त् । याव॑त् । सूर्यः॑ । वि॒ऽपश्य॑ति ॥ ३४ ॥ (३५)

पञ्चमेनुवाके द्वितीयं सूक्तम् ॥

पञ्चमोनुवाकः ॥

इति दशमं काण्डं समाप्तम् ॥

---

१ P P[2] J V Cp यः ।.